॥ श्रीः ॥

# ॥ अद्भुतांशुकम् ॥

नाम नाटकम् ॥

श्रीयदुशैलवासि–बालधन्वि–जग्गू-
श्रीवकुळभूषणकवि
विरचितम्॥



# Adbhutamsuka-Natakam

BY

Sri-Jaggu-Vakula-Bhushanarya
OF MELUKOTE



BANGALORE:
PRINTED BY V. B. SOOBBIAH & SONS
AT THE M. B. D. ELECTRIC PRINTING & LITHO WORKS

1932.

 Price Re. 1-0-0

॥ श्रीः ॥

## विज्ञप्तिः

---

विज्ञापनामिमामवधारयन्तु सहृदयोत्तंसाः । विदितमेव भवतां यदष्टोत्तरशतस्थानसारभूते यादवाचले परमपुरुषो भगवान् श्रीमन्नारायण-स्त्ववरगकमनुतमाश्रितायां जनतायास्सकलपुरुषार्थवितरणवद्धदीक्षो वरीवर्ति —इति ॥

तस्यैव भगवतो नारायणस्यानुग्रहाद्वासनारूपेणाङ्कुरितामविगतसकलानवद्यविद्यानामस्मदार्याणामनुग्रहामृतसेकसंवर्धितां कविताल्लतां सफलयितु-कामो वीररसप्रधानं नाटकं विरळप्रचारं मन्वानश्च श्रीकृष्णभक्तपराधीनता-प्रतिपादकं भारतवस्तु-स्वविकृत्य वीररसप्रधानमङ्गुलांशुकं नाम नाटकमिदं महाकवि—श्रीभट्टनारायणकृतस्य वेणीसंहारस्य पूर्वरङ्गत्वेन व्यरीरचम् । अत्र च रसपरिपोषणाय यथामति तत्र तत्र वस्तुविनिमयं परिकल्प्य पाण्डवानामुत्कर्षं तत्र तत्र युक्त्या प्रादर्शयम् । "आपरितोषाद्विदुषां न साधु मन्ये प्रयोग विज्ञानम् "—इति महाकविकाळिदासोक्तिमनुरुध्य च विदुषामग्रतस्समग्रं श्रवणपथमिद-मनीनयम् । एतदवलोकनेन परितुष्टैस्तैः पण्डितवरैःप्रोत्साहितोऽहं मुद्रणद्वारा प्राचीकशमिदम् ।

एतन्मुद्रणार्थं द्रविणप्रदानादिना साह्यं कृतवतामुदारहृदयानां मुद्रण-नये च परिष्करणादिभिरुपकृतवतां महात्मनां च सन्निधौ सादरमर्पयामि तज्ज्ञतापुरस्सरान् धन्यवादान् । श्रीमतां महामहोपाध्यायेत्यादिबिरुदाङ्किता मर्षशास्त्रविशारदानां आर्—शा नशास्त्रिणामाङ्ग्लभाषातिकामवतारिकां पयाऽनुगृहीतामादौ संयोज्य, तेषामुपकृतिमनवरतमपि सादरं स्मरामि ॥

किञ्च–श्रीमत्परमहंसेत्यादिविरुदालङ्कृतैः श्रीयदुगिरियतिराजमठदिव्यसिंहासनाधिरूढैः सकलशास्त्रग्रन्थपरिशीलननिष्णातैः श्रीमत्कुमाररामानुजयतिवरैरस्य नाटकस्य सरसरमणीयोऽयमुपोद्घातः परमकृपयाऽनुगृहीत इति तेषां चरणारविन्दसन्निधौ प्रणतिपूर्वकमावेदयामि मम कृतज्ञताम् ।

गुणैकपक्षपातिन्यः परार्थकृतनिश्चयाः ।
जयन्ति काश्चिदेवान्न मूर्तयः कीर्तिभूषणाः ॥

---

जग्गू श्रीबकुलभूषणः—
(जग्गू अळवारैय्यङ्गार्)

# INTRODUCTION

BY

Mahamahopadhyaya Arthasastra-Visarada,

Dr. R. Shama Sastry.

So sweet is the Sanskrit tongue and so charming are the stories of the great Indian Epics, the Mahabharata and the Ramayana, that no Sanskrit scholar with some poetical talent can suppress his desire to versify or dramatise one or the other of the thrilling anecdotes narrated in them. He finds the plots ready made for him there ; and all that he has to do is to arrange the matter with or without some modification of his own into scenes and acts. The feelings of sympathy or antipathy, of disinterested friendship or virtuous indignation, and of virtue's triumph over wickedness or its meek submission to fate for the time being aroused in the breast of the reader or the spectator of the drama are so genuine and natural that no effort is needed on the part of the dramatist to change the original plot and bring it to culmination. Notwithstanding the supernatural occurrences with which the story abounds, it by no means loses its value of human interest. Divine intervention is made to play its part only where frail nature is evidently anticipated to fail miserably in its struggle against wickedness, and submit itself to the inevitable catastrophe. Such a turn makes human interest in the event all the more intense than dull and stupifying. It also teaches the sure support of the supernatural to virtue in its struggle against evil. This is why Indian poets, truly religious in their heart, are not tired of repeating the stories of the Indian Epics in prose, poetry, and drama over again and again.

Nor is the skill of originality in narrating the old tales lost sight of. To make the narration attractive and impressive, the poet bestows more of his skilful labour and care on the elegancy of diction and arrangement than on devising a plot anew. What need is there for a new form of plot, when it is a story of the struggle of virtue against evil and when the human breast, however prone to evil at first it might be for some temporary success

or pleasure, ultimately takes delight in seeing virtue triumph over evil? It is this which forms the centre of human interest in stories and histories with or without the supernatural interference.

Accordingly with no necessity for making an apology for the selection of his subject-matter from the Mahabharata, the young poet, Mr. Vakulabhushana, young in age, but not in thought, has made a successful attempt in dramatising the Epic story, as narrated in the Sabha and Vana Parvas. The introduction of the golden deer and the shortening of the period of the Pandavas' forest-life with conditions other than those mentioned in the Epic are his own modifications made to suit the drama.

The drama is called "Adbhutamsuka," "The Astonishing Garment," and the astonishment lies in the endless length which the garment worn by Draupadi, the queen of the Pandavas, had on the day of Dussāsana's attempt to outrage her modesty. It contains six Acts and affords an interesting reading with no trace of any tedious description. Sometimes the dialogue is so humorous that the absence of a Vidushaka in the drama to cause mirth is scarcely felt.

The style is simple and lucid; the verses are elegant and run smooth. I have no hesitation in saying that he is a promising young poet and can rise to our expectations of him with due encouragement. He deserves congratulation on the success he has attained in his first attempt.

R. Shama Sastry

Mahamahopadhyaya, Arthasastra-Visarada.

॥ श्रीः ॥

श्री. उ. परमहंसपरिव्राजकेत्यादिबिरुदालङ्कृतैर्यदुगिरि-
यतिराजसंपत्कुमार-स्वामिभिरनुगृहीतः ॥

## * उपोद्घातः *

श्रीयादवाचलाभिजनस्य कौशिकान्वयस्य जग्गूश्रीवकुळभूषणशर्मणः कवेः कृतिरद्भुतांशुकं नाम नाटकमङ्कषट्कपरिमितं समग्रमस्माभिरवालोकयत । अवाभोधि च तत्र तत्र कविमुखादेव साक्षात्स्वाशयाविष्करणपूर्वकं समग्रस्सन्दर्भः । वस्तु च प्रधानमत्र नाटके द्रौपद्या वस्त्राहरणम् । उपनायको भीमः । राजसूये भीमकृतदुर्योधनपराभवो मुखसन्धौ निवेशितः । अंशुकाहरणात्प्राक्तनस्सभापर्ववृत्तान्तशेषः, पाण्डवानां वनप्रवेशसमयबन्धोऽर्जुनस्येन्द्रलोकगमनम्, भीमस्य सौगन्धिकाहरणं, दुर्वाससो युधिष्ठिरसमीपागमन मित्येषोऽरण्यपर्वकथाभागः, कीचकवधः, उद्योगपर्ववृत्तान्तश्च समाकृष्य प्रतिमुखादिसन्धिष्वंशुकाहरणरूपनिर्वहणसन्धेः पूर्वाङ्गतया यथायोगं विनिवेशितः । वनवाससमयबन्धेऽज्ञातवासस्य पूर्ववृत्तदमितरवनवासस्योत्तरवृत्तत्वञ्च कविनाऽन्ययैव प्रकल्पितम् । वनवासे दुर्वाससस्सकाशाद्रहसि कृष्णेन कृतस्य पाण्डव परित्राणस्य कथाभागः, कृष्णस्य रूपान्तरपरिग्रहेण दुर्वाससश्शिष्यत्वं परिकल्प्य मायामृगत्वपरिकल्पनेन प्रधानवस्तुनोऽङ्गतां नीतः । युद्धारम्भस्य प्राक्तनः-कृष्णेन कृतस्य कौरवपाण्डवसन्धिसन्धानस्य वृत्तान्तोऽस्मिन्नाटके "चिरप्ररूढ वैरेण कौरवेणास्माकं यत्सन्धिं कल्पयसीति ततोऽप्यस्ति किं प्रियमन्यत्"— इत्यनेन युधिष्ठिरवाक्येन निर्वहणसन्धावुपक्षिप्तः । भट्टनारायणकृत-वेणीसंहारस्य पूर्वरङ्गत्वेनेदं रूपकं कृतवता कविनोभयोरलक्षितसन्धिबन्धत्वं षष्ठाङ्कावसाने युक्त्या प्रतिपादितम् । संविधानवैचित्री च कवेरवधानविशेषं स्पष्टयति । भीमसेनोक्तपद्येष्वारभटी वृत्तिरुद्योतिता । कवितासरणिश्च पद्ये गद्ये च ललितरमणीया सुखावगाहतां प्रकटयति । उक्तिभङ्गीषु "राजसूयाध्वर" इत्यत्र "राजाऽसूयाध्वर" इति, मृगरूपधारिणः कृष्णस्य "कृष्ण-

मृगत्व'' मित्याद्यास्सहृदयामोदं न खलु नाम न विदधते । यदन्यदत्र वक्तव्यं तत्सहृदयानां नाटकमवधारयतां हृदयमावर्जयतीति त एवात्र साक्षिण इति– शम् ॥

कवेरन्वयाभिजनादिकं किञ्चित्प्रदर्श्यते । आसन्किल यादवाचलाभिजनाः कौशिकान्वयभूषणं सरसकविताविलासलास्यमन्दिरं सुगृहीतनामानो विद्वद्वतंसाः तेषां द्वौ मनोजवसौ कुमारौ । ज्येष्ठो नारायणार्यः, अन्यो वेङ्कटार्य इति । अयन्तु कनीयान् साङ्ख्य-साहित्य-वेदान्त-निष्णातो निजकविता-मोदितविपश्चिद्वर्गस्सांप्रतं तमेव यादवाचलमधितिष्ठति । नारायणाचार्यस्य पुत्रेषु त्रिषु ज्येष्ठः पितामहसनामधेयशिङ्करार्यनामा चित्रकूटोदन्तादि-प्रबन्धस्य कर्ता समिन्धे ॥

कनीयान् वकुळभूषणनामा तु-अनेनाङ्कुतांशुकनाटकेनैव समावेदित-साहितीसार इति नाषडक्षीणं सहृदयानाम् ॥

एवमियं त्रिपूरुषी कविताविताननप्रतानित-विपश्चिदपश्चिम-सम्मोदैत्य-पर्याप्तेयं वाचोयुक्तिः ॥

अस्य तु कवेः पितामहानामसत्साहित्यगुरूणां सुगृहीतनाम्नां मूर्तिः पञ्चाशद्वर्षेभ्यः प्रागेवान्तरिताऽपि–नेपथ्यान्तरिता परिवादिनी विभिन्नस्वर-मण्डलतन्त्रीपरम्परयेव, यमुनानिकुञ्जनिलीन-वल्लवपल्लवमुरळी सुषिरपरंपरा-विर्मितनादधारयेव–स्वसन्तानपरंपरयाऽस्माकं श्रुतिं चक्षुषी चाह्लादयन्ती अस्य कवेर्मूर्तिद्वारा–प्रत्यक्षीभूय तद्गुणग्रहणेन रसनां स्नपयतीति परां काष्ठामानन्दस्यानुभवामः ॥

सम्प्रत्यायुष्मतः कवेरिदमेकमभिधीयते—

उद्याने कलकण्ठ ! कण्ठमधुना मा कुण्ठयोत्कण्ठया
सर्वस्सादरमाश्रवस्तव गिरां सीमासु दत्तश्रवाः ।
उन्मीलन्मुकुलप्ररूढवकुलव्यालीनभृङ्गीकुल-
व्यामर्दानुकूलस्फुरत्परिमलः कालोऽयमालोक्यताम् ॥

प्रजोत्पत्ति सं—मार्गशीर्ष-
शुक्लदशमी-मन्दवासरे ॥ } श्री रामानुजः

|| श्रीरस्तु ||

|| श्रीमते हयग्रीवाय नमः ||

# || अद्भुतांशुकम् ||



## (प्रथमोऽङ्कः)

श्रीमान् विष्णुः परात्मा निजभुजमथितप्रोच्चलन्मन्दराद्रि-
दैत्यान् भ्रान्तान् विमोह्याप्यमृतविभजने लब्धनारीविलासः ।
क्षीराब्धेरुद्धृतां य श्श्रियमधिगतवान्वर्धयन् संश्रिताना-
मानन्दं दिव्यमाद्यो वितरतु भगवान् मङ्गलं सन्ततं वः || १ ||

जीयाद्रामानुज श्श्रीमान् संश्रितानन्दवर्धनः ।
प्राप्तकिङ्करभावोऽपि दर्शिताद्भुतवैभवः || २ ||

(नान्द्यन्ते सूत्रधारः- समन्तादवलोक्य--आनन्दमभिनीय)

(अञ्जलिं बद्ध्वा)

यदुगिरिमणिदीप श्श्रीनृसिंह श्चकास्ति
श्रितजनपरिपाता भाति नारायणोऽपि ।
शठरिपुमुनिरास्ते तस्य पादाब्जभृङ्गो
वकुलधवलमालाभूषण स्सत्कवीन्द्रः || ३ ||

( सरभसं प्रविश्य नटी)

(क) अळं अळं सुक्खभणिदेण ।

---

(छाया) [क] अलमलं शुष्कभणितेन.

**सूत्रधारः** ॥ (सावेगं पार्श्वमवलोक्य) प्रिये ! किमिति माममन्दानन्दादेवं विघटयसि ?

**नटी** ॥ (क) किं अज्ज सन्तोसस्स कारणं ? किं तुए धणं लद्धं ?

**सूत्रधारः** ॥ (सस्मितं) आम ! लब्धमेव धनं ; पश्याद्य खलु यदुशिखरिशेखरस्य श्रीभूनीळावल्लभस्य भगवतस्सम्पत्कुमारस्य हीरकिरीटोत्सवदिदृक्षया समन्तात्समागतैर्वैदेशिकैः पण्डितवरैराज्ञप्तोऽस्मि, अदृष्टपूर्वं वीररसप्रधानं किमपि नाटकमभिनेतव्यमिति । तदिदमेव धनं हि, यतो भरतशास्त्रेऽस्मत्पाण्डित्यप्रदर्शनायावसरः प्राप्तो दैवात् ॥

**नटी** ॥ (दीर्घं निश्श्वस्य) (ख) घरे दरिद्दत्तणेण बुहुक्खिआ पुत्तआ रोइन्दि, तुमं उण सन्तुट्ठो एत्थ कीळसि । (विचिन्त्य) होदु दाव, तारिसं णाडअं केण कइणा किदं वट्टेइ ?

**सूत्रधारः** ॥ एतदर्थमेव प्रथमं तावन्मयोपक्रान्तम् " यदुगिरिमणिदीपः " इति । तावता भक्त्या प्रतिबद्धोऽहम् ॥

**नटी** ॥ (सस्मितं) (ग) ता कहेदु भवं ।

**सूत्रधारः** ॥ अवहिता शृणु तावत् । अस्ति हि श्रीयादवाद्रिवासिना बालधन्विकुलकलशार्णवकलानिधेः सुगृहीतनाम्नो जग्गू-श्रीशिङ्गरार्यस्य पौत्रेणानवरतमपि भगवद्भजनाधिगतामन्दानन्दस्य जग्गू-श्रीनारायणार्यस्य तनूजेन जग्गू-श्रीवकुलभूषणेन कविना विरचितमद्भुतांशुकं नाम नाटकम् ॥

**नटी** ॥ (घ) तहिं णाडए किं वत्थु कइणा णिबद्धम् ?

**सूत्रधारः** ॥ ननु भारतकथा हि तत्र ।

---

(छाया) [क] किमद्य सन्तोषस्य कारणं, किं त्वया धनं लब्धम् ?

[ख] गृहे दारिद्र्येण बुभुक्षिताः पुत्रका रुदन्ति, त्वं पुनस्सन्तुष्टोऽत्र क्रीडसि । भवतु तावत्, तादृशं नाटकं केन कविना कृतं वर्तते ?

(ग) तर्हि कथयतु भवान् ।

(घ) तस्मिन्नाटके किं वस्तु कविना निबद्धम् ?

**नटी** ॥ (क) ता तं महाकइभट्टणाराअणेण वेणीसंहारणाडए पुव्वं एव्व किदं हि । किं पुणोवि तं वत्थुणिम्माणे किदुज्जोओ एसो कई ?

**सूत्रधारः** ॥ (विहस्य) प्रिये ! मन्दप्रज्ञाऽसि, शृणु तावत्—

यद्भट्टनारायणनिर्मितं प्राग्
वेण्यां महाभारतवस्तु रम्यम् ।
तत्पूर्वभागमत्र विधाय वेण्या
संयोजितं श्रीकविना त्वनेन ॥ ३ ॥

**नटी** (ख) ॥ अम्हहे । कइणो बुद्धिविहवं सुणिअ अच्चरिअसमुद्दे मग्गं मह हिअअम् ॥

(नेपथ्ये)

राजानः प्रविशन्तु सौधमुचितं तैराहृतैः पूर्यतां
कोशागारमनल्प-रत्नकनकैरर्थैश्च पट्टांशुकैः ।
नानादेशसमागताश्च रुचिरा गावो विशन्त्वञ्जसा
गोष्ठं तत्परिरक्षणैकनिरतास्सन्तु प्रबुद्धा जनाः ॥ ४ ॥

**नटी** ॥ (कर्णं दत्वा) (ग) किं एदं ?

**सूत्रधारः** ॥ [स्वगतं] हन्तास्मदाज्ञानुयायिभिर्नटैस्समारब्धमेव नाट्यम् । (प्रकाशं) प्रिये ! किं न जानासि युधिष्ठिरेण राजसूयाध्वरः करिष्यत इति ? तत्कृते देशान्तरादागतैर्नरपतिभिरुपायनीकृतानां धनकनकादिसम्भाराणां रक्षणाद्यादेशशब्दोऽयम् ॥

**नटी** ॥ (सहर्षं) (घ) किं तत्त धणकणआइ देदि ?

---

(छाया) (क) तर्हि तन्महाकविभट्टनारायणेन वेणीसंहारनाटके पूर्वमेव कृतं हि । किं पुनरपि तद्वस्तुनिर्माणे कृतोद्योग एष कविः ?

(ख) अहो ! कवेर्बुद्धिविभवं श्रुत्वा आश्चर्यसमुद्रे मग्नं मम हृदयम् ॥

(ग) किमेतत् ?

(घ) किं तत्र धनकनकानि ददाति ? ।

सूत्रधारः ॥ (स्वगतं) आशापोषिता खलु स्त्रीबुद्धिः (प्रकाशं) अथ किं ? ददात्येव धार्मिको महाराजो युधिष्ठिरोऽर्थिभ्यः ॥

नटी ॥ (सानुनयं) (क) ता तत्त गदुअ तुए आणिज्जअं अहिअं धणं।

सूत्रधारः ॥ (स्वगतं) भवतु नावदस्यास्सद्यस्सौहित्यं सम्पादयामि---- [प्रकाशं] प्रिये ! साधु मन्त्रितम् ; हतमेव मे दारिद्र्यं ; पश्य ! एषोऽधिकृतः पुरुष इत एवाभिवर्तते, तद्गच्छावः (इति निष्क्रान्तौ) ॥

## इति प्रस्तावना.

---

(ततः प्रविशत्यधिकृतः पुरुषः)

पुरुषः ॥ राजानः प्रविशन्तु सौधमिति-पूर्वोक्तमेव पठति.

(सत्वरं प्रविश्य विप्रः--)

विप्रः ॥ भो भो ! अधिकारिन् ! अपि नाम युधिष्ठिरेण समारब्धो यज्ञः ?

पुरुषः ॥ नह्यारब्धः ॥

विप्रः ॥ किमर्थम् ?

पुरुषः ॥ जैत्रयात्रार्थं गतो भीमसेनो नाद्याप्यागतः ।

विप्रः ॥ किमर्जुनादयस्समागताः ?

पुरुषः ॥ अथ किम् ? ते तु विजितनिखिलदिङ्मण्डला वशीकृतभूपाला स्समाहृतरत्ननिकरा देवपादमूलमागताः ॥

विप्रः ॥ तर्हि जेतव्यं किमवशिष्टं, यज्जिगीषया भीमो गतः ?

पुरुषः ॥ सुमहदवशिष्टम् ।

विप्रः ॥ किं तत् ?

पुरुषः ॥ हास्तिनपुरम् ; तज्जयाय गतो भीमः ।

विप्रः ॥ तर्हि नाहूतः किम् सपरिवारो दुर्योधनो युधिष्ठिरेण ?

---

(क) तर्हि तत्र गत्वा त्वया आनेतव्यं अधिकं धनम् ।

पुरुषः ॥ महाराजेन सादरं राजसूयाध्वराय सपरिवारं भवता समागन्तव्यमिति पत्रिका प्रेषिता । अनुपदमेव निजभुजबलावलेप-विस्मृत-पाण्डव-भुजबलेन तेन दुर्योधनेन "मामजित्वा कथं वा त्वया राजसूयाध्वरस्समारभ्यते ?" इति प्रतिपत्रिका प्रेषिता । तन्महाराजेन युधिष्ठिरेण समाज्ञप्तस्त-ज्जिगीषया प्रस्थितोऽसौ भीमसेनः ॥

विप्रः ॥ तर्हि स तु भीमसेनो जेष्यत्येव तम् ॥

(नेपथ्ये रथनेमिध्वनिः)

पुरुषः ॥ (नेपथ्याभिमुखमवलोक्य-सहर्षम्)

हन्त ! रथवरस्तम्भसंयतबाहुयुगळं सुयोधनमानीय संयतकरचरणैः कर्णादिभिरित एवाभिवर्तते भीमसेनः । तदारब्ध एवाध्वरः । तद्गच्छतु भवानध्वराय । अहमपि राजनियोगमनुतिष्ठामि [इति निष्क्रान्तः]

विप्रः ॥ (सहर्षं) अहमप्यध्वरे ऋत्विक्पदमलङ्करोमि (इति निष्क्रान्तः)

इति शुद्धविष्कम्भः ॥

---

(ततः प्रविशति यथा निर्दिष्टो भीमसेनः)

भीमः ॥ (रथादवरुह्य) (लज्जावनतमुखं सुयोधनं सकद्गदां च वीक्ष्य-सस्मितम्)---

चञ्चत्पीवरबाहुतोलनरणद्घण्टासहस्रोद्गिर-
त्प्रोच्चण्डारवदारितारिहृदया सौवर्णपट्टाञ्चिता ।
एकैवेयमलं गदा मम यतो युद्धाङ्कणे लीलया
सम्पाद्यार्पयतीदृशामपि मुहुर्दुर्योधनानां शतम् ॥ ९ ॥

दुर्योधनः ॥ (स्वगतं) स्वयंकृतापराधस्य फलमिदं मम यदश्राव्य-मिदानीं श्रोतव्यं संवृत्तम् । यदि युधिष्ठिरप्रेषितां पत्रिकामवलोक्य सपरिवारस्समागतोऽहं तदा नैतादृशी ममावस्था स्यात् ॥

भीमः ॥ (समन्तादवलोक्य) कः कोऽत्र भोः ?

प्रविश्य पुरुषः ॥ (क) आणवेदु कुमारो ।

भीमः ॥ क्वेदानीं वर्तते महाराजो युधिष्ठिरः ?

पुरुषः ॥ (ख) कुमार ! जण्णसाळाए बद्धदिक्खो अणुजेहिं समं जण्णसेणीए अ वट्टेदि ॥

भीमः ॥ तर्हि यज्ञशालामार्गमादेशय ॥

कर्णः ॥ (शकुनिमुखमवलोक्य-जनान्तिकं) न कदाऽप्यनुभूताऽवस्थाऽस्माभिरेतादृशी; किं पुनरितोऽप्यधिकमवहेळनं मवनशालायां समापतिष्यतीति न जाने ॥

पुरुषः ॥ (ग) इदो इदो कुमारो ।

भीमः ॥ सारथे ! प्रेषय रथमध्वरशालाद्वारदेशं [इति परिक्रामति]

[ततः प्रविशति बद्धदीक्षो विनयावनतैरनुजैः परिवृतो लज्जावनतमुखकमलया द्रौपद्या सह त्रस्यामुपविष्टो युधिष्ठिरः]

युधिष्ठिरः ॥ (अर्जुनमुखमवलोक्य) किमद्यापि नागतो वत्सो भीमः ?

दुर्योधनस्य गदया किमु पीडितस्स्या-
द्वत्सोऽथवा शकुनि-कर्णशरानुविद्धः ।
जेतुं गतः प्रकुपितः कुरुराजधानीं
नाप्यागतोऽद्य सुचिरं नगराद्विपोर्यत् ॥६॥

द्रौपदी ॥ (घ) (सोद्वेगं) तं सच्चं एव्व अज्जउत्तेण जं भणिदं दुज्जोहणो गदाजुद्धे समत्थोत्ति, कण्णो वि धणुजुद्धे किदहत्थळाहवोत्ति अ सुणीअदि ।

(छाया) (क) आज्ञपयतु कुमारः

(ख) कुमार, यज्ञशालायां बद्धदीक्षोऽनुजैस्समं याज्ञसेन्या च वर्तते ।

(ग) इतइतः कुमारः ।

[घ] तत्सत्यमेवार्यपुत्रेण यद्भणितं दुर्योधनो गदायुद्धे समर्थ इति ? कर्णोऽपि धनुर्युद्धे कृतहस्तलाघव इति च श्रूयते !

**अर्जुनः ॥** न चिन्तनीयमेवमार्येण ; स त्वजित्वा परबलं नैव परावर्तते, तदचिरेणैव विजित्य शत्रुमागमिष्यत्यार्यः ॥

**प्रविश्य पुरुषः ॥** [क] जेदु जेदु महाराओ। कुमारभीमसेणो आणीअ दुज्जोहणं दुवारे चिट्ठदि ।

**युधिष्ठिरः ॥** (सानन्दं) सत्वरं प्रवेशय ।

**पुरुषः ॥** (ख) जं देवो आणवेदि (इति निष्क्रान्तः)

**[ततः प्रविशति गदापाणिस्सविनयं भीमसेनः]**

**भीमः ॥** आर्य ! अभिवादये विजितदुर्योधनो भीमसेनोऽहम् ।

(इति प्रणमति)

**युधिष्ठिरः ॥** वत्स ! चिरं जीव [इत्युत्थापयति]

(अर्जुननकुलसहदेवास्सत्वरं भीमसुपसृत्य) आर्य ! प्रणमामः (इति प्रणमन्ति)

**भीमः ॥** वत्साश्चिरं जीवत [इतिताननुगृह्णाति]

**द्रौपदी ॥** (सलज्जं सस्मितं च ) [ग] अज्जउत्त वन्दामि [इति प्रणमति]

**भीमः ॥** यज्ञवेदीसम्भवे ! अलमलमायासेन (इत्युत्थापयति)

**युधिष्ठिरः ॥** क्वेदानीं दुर्योधनः ?

**भीमः ॥** शृणोतु देवः—

आनीतोऽयमनीतिवर्धितमदो दुर्योधनस्स्यन्दन-
स्तम्भस्तम्भितबाहुदण्डयुगळो मित्रैश्च कर्णादिभिः ।
जेतव्यो न हि कोऽपि सम्प्रति नृपो विश्वम्भरामण्डले
तद्देवेन यथाविधि प्रियतमैरारभ्यतामध्वरः ॥ ७ ॥

---

(क) जयतु जयतु महाराजः, कुमारभीमसेन आनीय दुर्योधनं द्वारे तिष्ठति ।
(ख) यद्देव आज्ञापयति.
(ग) आर्यपुत्र वन्दे.

[इति संयतकरयुगळं रथाद्दुर्योधनमानीय] कस्कोऽत्र भोः ?

(प्रविश्य द्वारपालः)

द्वारपालः ॥ (क) आणवेदु कुमरो ।

भीमः ॥ मोचितचरणबन्धं वैधेयं राधेयमुपनय ।

द्वारपालः ॥ (ख) जं कुमरो आणवेदि [इति निष्क्रम्य कर्णेन पुनः प्रविश्य] एसो आणीदो ।

भीमः ॥ उल्लङ्घितास्मच्छासनं दुश्शासनमानय ।

द्वारपालः ॥ (ग) तह (इति निष्क्रम्य–दुश्शासनेन पुनः प्रविश्य) एसो आणीदो ।

भीमः ॥ शकुनिमपि कुनीतिनिपुणमुपनय ।

द्वारपालः ॥ (घ) तह (इति निष्क्रम्य–शकुनिना पुनः प्रविश्य) एसो आणीदो ।

भीमः ॥ (तान् सर्वान् युधिष्ठिरचरणयोः पातयित्वा क्रमशस्स्थापयित्वा गदया निर्दिश्य च–सस्मितम् )

देवः पश्यतु साधूना-
मस्माकममितौजसाम् ।
वञ्चनैः क्लेशदानैक-
सक्तं दुष्टचतुष्टयम् ॥ ८ ॥

द्रौपदी ॥ (सस्मितं स्वशिरो नमयति–सर्वे विहसन्ति)

(दुर्योधनादयो लज्जावनमितमुखास्तिष्ठन्ति)

युधिष्ठिरः ॥ वत्स ! अलमवहेळनेन, तान्मोचय बन्धनात् ।

---

(छाया) (क) आज्ञापयतु कुमारः ।
(ख) यत्कुमार आज्ञापयति ; एष आनीतः.
(ग) तथा, एष आनीतः ।
(घ) तथा, एष आनीतः ।

**भीमः** ॥ (स्वगतं) बाल्य एव विषदानेन समूलं मां नाशयितु-मुद्युक्तेष्वेतेषु न पर्याप्तमिदमवहेळनम् । [प्रकाशं] यदाज्ञापयति देवः (पश्चाद्विलोक्य) कः कोऽत्र भोः ?

(प्रविश्य द्वारपालः)

**द्वारपालः** ॥ (क) आणवेदु कुमरो ।

**भीमः** ॥ (तान् गदया निर्दिश्य) विस्रंसय हस्तग्रन्थिमेतेषाम् । (द्वारपालस्तथा करोति.)

**दुर्योधनः** ॥ (स्वगतं) यदि भवेयं भीमगदाभिघातेन प्रमीतस्तदा जीवितकल्पस्स्याम्, अद्य तु मृतकल्प एव यतः कश्चन द्वारपालो मन्निगळं मोचयति ।

**कर्णः** ॥ (दुश्शासनमवलोक्य—जनान्तिकं) अपि नाम चछुरिकया विदार्य मदीयं हृदयं त्यजेयं प्राणान् ?

**दुश्शासनः** ॥ (जनान्तिकं) किमिदानीमस्माभिः परवशैः कर्तुं शक्यम् ?

**युधिष्ठिरः** ॥ वत्स !

यूयं मम यथा भीम ! तथैते भ्रातरो मताः ।

**भीमः** ॥ स्यान्नाम, तर्हि किमद्य कुर्मः ?

**युधिष्ठिरः** ॥ तत्कुरुष्व धनाध्यक्षं सुयोधनमिहाध्वरे ॥ ९ ॥

**भीमः** ॥ यदाज्ञापयति देवः [इति विकटं परिक्रम्य-दुर्योधनमवलोक्य] आगच्छतु महाराजदुर्योधनः ।

**द्रौपदी** ॥ स्मयते ।

**दुर्योधनः** ॥ अवनमितमुखो भीममनुसरति ।

**अर्जुनः** ॥ आर्य ! अयं शकुनिः ।

---

(क) आज्ञापयतु कुमारः ।

**भीमः** ॥ (ससम्भ्रमं) क्व डीयते शकुनिः ? गृहाण तं पञ्जरे स्थापयामः (इति गगनमवलोकयति) ।

(सर्वे विहसन्ति— शकुनिश्शिरो नमयति)

**अर्जुनः** ॥ (स्वगतं) हन्त ! कथमिव कटुवचनेनार्यः पीडयत्येतेषां मनांसि ? अथवा जतुगृहोद्दीपनेन प्रकटितहृदयकाटवेष्वेतेषु न पर्याप्तमिदम् । (विहस्य—शकुनिमङ्गुल्या निर्दिश्य—प्रकाशं) एनं महाराजदुर्योधनस्य मातुलं ब्रवीमि न तु पतगम् ।

**भीमः** ॥ (सशीर्षान्दोलनं) किमेनं ब्रवीषि ? समागच्छतु महाराज-दुर्योधनस्य मातुलश्शकुनिराजः (इति परिक्रामति)

**दुर्योधनः** ॥ (स्वगतं) हन्त ! मन्नामगन्धमेव बान्धवजनमामन्त्रयति वृकोदरः ।

(**शकुनिः** ॥अवनमितमुखो भीममनुसरति)

**अर्जुनः** ॥ आर्य ! अयं कर्णः ।

**भीमः** ॥ (ससम्भ्रमं परिक्रम्य) पश्य ! गृह्णामि (इति शकुनिकर्णं गृहीत्वा समाकर्षति)

(**शकुनिः** ॥ वेदनामभिनयन् चेष्टते) (सर्वे विहसन्ति)

**अर्जुनः** ॥ आर्य ! महाराजदुर्योधनमित्रं राधेयं ब्रवीमि ।

**भीमः** ॥ (सशीर्षान्दोलनं सस्मितं च) किमेनं वैधेयं ब्रवीषि ? एहि रथकारकुलप्रदीप ! (इति गदया कर्णं परिनुद्य-निजमस्तकमान्दोलयन्) हन्त ! किमि त्ये कत्र विधात्रा सङ्घटिता इमे ?

आकर्ण्य शकुनिप्रोक्तं वचः कर्णादुपह्वरे ।
प्रलोभयति राजाऽयं साधून् शाकुनिको यथा ॥१०॥

(इति परिक्रामति)

**युधिष्ठिरः** ॥ (स्वगतं) किमयं प्रतिबोधितोऽपि नाद्यापि विरमति ?

अर्जुनः ॥ आर्य ! दुश्शासनमपि ।

भीमः ॥ (मत्वा) वत्स ! किमेतेषु कुर्वित्यावेदयसि ?

अर्जुनः ॥ नहि, नहि । दुर्योधनानुजं दूश्शासनमपि प्रस्थापय तैस्साकमिति निवेदितं मया ॥

भीमः ॥ किमेनं ब्रवीषि ? (इति दुश्शासनमामस्तकादापादमूलं निर्वर्ण्य—सस्मितं मस्तकमान्दोलयन्) वत्सार्जुन ! दुश्शासनमेनं सशरीरं दुर्योधनस्य दुश्शासनं मन्ये । अयमेक एवालं जगति साधुनाशाय ॥

युधिष्ठिरः ॥ वत्स ! भीम ! किमिदमभ्यर्थितोऽपि पुनःपुनरेतेषामुपजनयसि हृदयपीडामवहेळनेन ? समुचिते कर्मणि नियोजय दुर्योधनसहचरानेतानपि ।

भीमः ॥ (सविनयं) यदाज्ञापयत्यार्यः (इति परिक्रम्य) आगच्छतु महाराजदुर्योधनानुजो दुश्शासनः (इति तेन सह गन्तुमिच्छति) ॥

(प्रविश्याधिकृतः पुरुषः)

पुरुषः ॥ (प्रणम्य सविनयं) देव ! वासुदेवो बलदेवेन सम्प्राप्तः ।

युधिष्ठिरः ॥ (ससम्भ्रममुत्थाय) द्वारदेशमेव गत्वा तं भगवन्तं पश्यामः (इति तैस्सह परिक्रम्य-नेपथ्याभिमुखमवलोक्य सहर्षं) प्रिये ! यज्ञवेदीसम्भवे ! पश्य पश्य—

योगिध्येयो नवघनरुचिः पुण्डरीकायताक्षो
रक्षादीक्षावहननिरतः पीतवस्त्राञ्चिताङ्गः ॥
लक्ष्मीक्रीडामरकतगिरिर्भक्तकल्पद्रुमोऽयं
श्रीकृष्णो मे हरति नयने कोऽस्ति धन्यो मदन्यः ? ॥११॥

(आनन्दमभिनीय)

किमप्यनुलपन् स्मेरमुखाब्जस्सीरपाणिना ।
अस्रस्तांशुकं कर्षन्नभ्येति गरुडध्वजः ॥१२॥

[ततः प्रविशति यथानिर्दिष्टः कृष्णस्साग्रजः]

**कृष्णः** ॥ (बलभद्रमवलोक्य) पश्यत्वार्यः—

मदाशया बद्धनिजप्रवृत्तयो दिगन्तविश्रान्तविचित्रशक्तयः ।
मदीयपञ्चायुधवत् सुविग्रहास्समभक्ति पञ्चेह विभान्ति पाण्डवाः ॥१३॥

**बलभद्रः** ॥ कृष्ण ! पश्य ! यद्यज्ञवेदीसम्भवेति विश्रुता द्रुपदतनया तत्तथ्यमेव । यतस्त्वतेजःप्रकरेणाभिभवति नयनयुगळम् ॥

आगामिन्यध्वरे हव्ययाच्ञार्थं धर्मनन्दनम् ।
विनयादनुगच्छन्ती वह्निज्वालेव भात्यसौ ॥१४॥

**कृष्णः** ॥ अथ किं ? आर्य ! अस्याः सौजन्यं किं ब्रवीमि ? शृणु तावत्—

इयं मूर्तिमती शान्तिरस्मद्भक्ताग्रगामिनी ।
असिधारेव दुष्टानां राज्यकार्यधुरन्धरा ॥ १५ ॥

(किञ्च)

एकवल्लभमनोऽनुवर्तनं
योषितस्तु भुवि दुष्करं किल ।
पञ्चभर्तृहृदयानुसारिणी
तान् वशीकृतवती सतीमणिः ॥ १६ ॥

(इत्युपसृत्य) देव ! कृष्णः प्रणमति (इति युधिष्ठिरं प्रणमति)

**युधिष्ठिरः** ॥ (सत्वरं कृष्णं भुजाभ्यामुद्धृत्य) आर्य ! युधिष्ठिरः प्रणमति (इति बलभद्रचरणयोर्निपत्य) अपि कुशलं सीरपाणिचक्रपाण्योः ?

**बलरामः** ॥ आम् ।

**कृष्णः** ॥ भवदनुग्रहात् (इत्यग्रतोऽवलोक्य) हन्त ! महाराजदुर्योधनोऽप्यत्रैव (इत्युपसृत्य) कदा महाराजाधिराजेन यज्ञभूमिरियमलङ्कृता ?

(दुर्योधनो लज्जावनमितमुखो निरुत्तरस्तिष्ठति)

कृष्ण ॥ (भीममुखमवलोक्य सस्मितं) किमयं लज्जित इव दृश्यते?

भीम ॥ (उपसृत्य) कृष्ण! महाराजयुधिष्ठिरप्रेषितया पत्रिकया नायमानीतस्सार्वभौमः ।

कृष्ण ॥ [स्वगतं]—नास्मद् कोऽपि विशेषस्संवृतः स्यात्, भवतु, भीममुखेनैव प्रकाशयामि । (प्रकाशं) तर्हि कथा ?

भीम ॥ तत्प्रेषितयाऽनया (इति गदां पुरः प्रसार्य प्रदर्शयति)

कृष्ण ॥ (सस्मितं) तर्हि किमयं पराजितस्सार्वभौमः ?

भीमः ॥ अथ किम्?

दुर्योधन ॥ [स्वगतं] यदि कदाऽपि मदायत्तो भोक्ष्यमाणोऽयं तदा निमर्दयेयं पुत्रिकानर्तं नर्तयेयं च । नहि भवति मदधीनः । कथं वा वशीकरोम्येनं पापम्? कदा वा मदधीनो भविष्यति, न जाने (इति दीर्घं निश्वसिति)

युधिष्ठिरः ॥ [स्वगतं] किमद्यापि भीमोऽयं दुर्योधनावहेळनान्न विरमति [प्रकाशं] वत्स भीम! मनुजेन सौवे हस्तायुधेन पदं भ्रावन्नमेनमवतारय । वयमपि प्रकृतकार्यमनुतिष्ठामः ॥

भीमः ॥ तथा (इति तैस्सह निष्क्रान्तः)

युधिष्ठिरः ॥ प्रिये! शृणु तावत्—

कर्ता कारयिता भोक्ता योऽन्तरस्य स माधवः ।
समायातः करुणया किमितोऽप्यस्ति वैभवम्? ॥ १७ ॥

तत्साधयामस्तावत्प्रकृतकार्यकरणाय (इति निष्क्रान्तास्सर्वे) ॥

इति श्रीयदुशैलवासि-बालधन्वि-जग्गू-वकुळभूषणकवि-
विरचिते अद्भुतांशुकनाटके प्रथमोऽङ्कः ॥



॥ श्रीः ॥

# द्वितीयोऽङ्कः ॥



(ततः प्रविशति धनभस्त्रिकामुद्वहन् शिष्यः)

शिष्यः ॥ (श्रममभिनीय) न हि कुत्रापि प्राप्ता मया च्छाया। तपनस्तु परितपति माम्। अयं पुनर्द्रव्यभारो नमयति मम कन्धराम्। किं करोमि ? सब्रह्मचारिणां पुनर्मुखमपि पञ्चषैर्दिवसैर्न मया दृष्टम्। आचार्यस्तु-"मामनुपदमेव समागनमेहि" इति द्रव्यभारमेनं मच्छिरसि निधाय प्रेपितवान्। नाद्याप्यायातः (इति समन्तादवलोक्य) भवतु। नातिदूरे महाननोकहः परिदृश्यते, तत्र प्रच्छाये प्रथमं तावद्धनभारमवतारयामि (इति नाट्येन परिक्रम्य-वृक्षमूले धनभारं मन्दं निधाय, कन्धरां परिमर्दयन् परितो विलोक्य-सहर्षं) हन्त! समायाता स्सब्रह्मचारिणः ॥

एकस्स्कन्धे धान्यभारं दधानः
कुर्वन्नन्यो मस्तके वस्तुजातम्।
कक्षे वस्त्रं निक्षिपन्नूतमन्यो
ऽप्यायान्त्येते मन्थराः कुक्षिभारात् ॥ १ ॥

(ततः प्रविशन्ति यथानिर्दिष्टास्सब्रह्मचारिणः)

एकः ॥ (श्रममभिनीय) भोश्शतमालिन्! अलमन्तरेण, न दृष्टपूर्वोऽयं नापि श्रुतपूर्वः।

अन्य ॥ भो दीर्घकर्ण! कदाऽस्मदुटजपरिसरप्ररूढैः कन्दमूलफलैर्जिह्वाजडतामपनयेयं न जाने। अद्य तु हव्यङ्गवीनमयैर्भक्ष्यैर्भोज्यैश्च शक्तिविकला मदीया रसना।

अपरः ॥ नूनं न गृह्णात्येव रसं जिह्वा, जातमद्य निरर्थकं नाम रसज्ञेति ॥

अन्यः ॥ भोश्छित्रजट ! मया पुनर्दिक्षु विदिक्षु च पौरोगवा वल्लवाः कान्दविकाश्च घृतभरितबृहदजीषेषु पच्यमानानि विविधानि भक्ष्याणि च दृश्यन्ते ॥

एकः ॥ किं बहुना ? तपःप्रभावसम्भूतं ससैन्याय भरताय भरद्वाजेन कृतमातिथ्यमणुमात्रमप्यस्य न साम्यमावहति ॥

अपरः ॥ मम पुनर्जगदखिलमपि धनकनकमयमिव परिणतम् ।

अन्यः ॥ आस्तां तावदिदम् । क्व गतोऽस्मत्सब्रह्मचारी पिङ्गकेशः ?

अपरः ॥ (सानुतापं) हन्त ! स तु गुरुवचोनिगळितस्तद्धनपरिरक्षणैक-निरतो बन्दीकृत इवैकत्रैव तूष्णीमासीत् । नैकमपि पदं ततो निरगात् ॥

अन्यः ॥ तेन स्वादुतरं भक्ष्यभोज्यादिकं भुक्तं वा न वा, न जाने ॥

अपरः ॥ (विहस्य) चक्षुषाऽपि न दृष्टमिति प्रतिभाति ॥

अन्यः ॥ (सस्मितं) तद्गन्धगन्धोऽपि नानुभूत इति प्रतिभाति ॥

एकः ॥ (अग्रतोऽवलोक्य) हन्त ! स त्वत्रैव महीरुहमूलं प्रच्छाय-शीतलमधितिष्ठति । तदुपसर्पामः ॥

(सर्वेऽप्युपसर्पन्ति)

पिङ्गकेशः ॥ (सहर्षं) मद्भाग्यवशाद्यूयं समुदितास्संप्राप्ताः । किमु नाद्याप्यस्मद्गुरुचरणा भवतां दृष्टिपथमारूढाः ?

सर्वे ॥ सप्ततन्तुवैभवमनुभवद्भिरस्माभिर्नैव दृष्टा गुरुचरणाः ॥

पिङ्गकेशः ॥ हन्त ! मन्दभाग्येन मया गुरुधनरक्षणनिरतेन यज्ञशालाद्वारदेशोऽपि नावलोकितः ॥

सर्वे ॥ हन्त ! ते निरर्थकं जातमिदानीं जन्म, यतो नानुभूतं भवता यागवैभवम् ॥

पिङ्गकेशः ॥ (सदैन्यं) यदि यूयमपि विवक्षवः, तर्हि श्रोतुकामो-ऽस्मिअध्वरे किं किं संवृत्तमिति ॥

**शतमाली** ॥ भोः पिङ्गकेश ! असमर्थोऽहं तद्वक्तुमपि वैभवम् । तद्दीर्घकर्ण एव कथयतु ॥

**दीर्घकर्णः** ॥ वक्तव्यबाहुल्यादहमपि तथैवासमर्थः । तथाऽपि सारं सारं कथयामि, शृणु तावत् ॥

**पिङ्गकेशः** ॥ अवहितोऽस्मि ।

**दीर्घकर्णः** ॥ ऋजीषाणि घृतपच्यमानभक्ष्यतया निपतद्वर्षपृथुलपृषद्गणदन्तुरितानि समुद्वल्बुद्बुदतारङ्कितानि सरांसीव प्रतिमहानसं समदृश्यन्त ।

**चित्रजटः** ॥ प्रणीतानां तु स्वादुतां किं ब्रवीमि ?

**शतमाली** ॥ पर्याप्तम् तेमनमेकं, तस्मिन्निमज्जितानामपूपानां स्वादुताऽद्यापि ज्योत्स्ना चन्द्रकान्तशिलामिव मे रसनामातनोति ॥

**दीर्घकर्णः** ॥ हन्त ! कति शर्कराभरितभस्त्रिकाराशयः, कति वा घृतभाजनानि कुलाचलानतिक्रामन्ति स्म ॥

**चित्रजटः** ॥ हन्त ! चक्षुषि निखातानीव दृश्यन्तेऽधुनाऽपि तत्रतत्र दुह्यमानानि गवां कुलानि ।

**शतमाली** ॥ (सहर्षं) वयं तु प्लाविताः क्षीरदधिप्रवाहेषु मज्जिता हय्यङ्गवीनेषु ॥

**शतमाली** ॥ किं बहुना ? शतसहस्रभोक्तृवर्गभोजनसूचकस्सकृद्घण्टानादः प्रतिक्षणमुदचरत् । चिन्त्यतां भवतैव कति भोक्तार इति ।

**चित्रजटः** ॥ स्यादेतत् । न चित्रमिदं ; यदनवरतमपि सर्वेषामभ्यागतानां द्विजोत्तमानां मुनीनां च चरणप्रक्षाळनादिपरिचर्यानिरतोऽभूद्भगवान् वासुदेव इति, तदत्यद्भुतं हि ।

**पिङ्गकेशः** ॥ (साश्चर्यं) हन्त ! भगवान् वासुदेवस्तस्मिन् कर्मणि किं नियोजितो युधिष्ठिरेण ?

**चित्रजटः** ॥ (विहस्य) को वा तं न्नियोजयति ? स्वयमेवासीद्भागवतचरणपरिचर्यासक्तः । स तु भक्तपरवशः किल ।

शतमाली ॥ (सानन्दं विहस्य) पिङ्गकेश ! स्यान्नाम भगवतो वासुदेवस्य कार्यं; शृणु तावत्प्रतिदिनमस्मत्कार्यम् । स्नात्वा समाहितस्तथा दक्षिणानां यागशालायां तत्रतत्र पर्यटन्तः कदा वा परिवेषणकालस्समापतिष्यतीति चिन्तयन्तश्च प्राप्ते च भोजनावसरे पिपीलिकापङ्क्तिमदृशीषु भोक्तृपङ्क्तिष्वभवाम सज्जाः ॥

पिङ्गकेशः ॥ (सहासं) ततस्ततः ।

शतमाली ॥ ततश्च तत्र यथेच्छं भुक्त्वा उदरभारासहिष्णवो मसृणतरे धरणीतले निपत्य परिलुठन्तः कालमासायमत्यवाहयाम ॥

पिङ्गकेशः ॥ हन्त ! क्वापि लीनं व्रताचरणं, विस्मृतं नियमाध्ययनं, महानस एव भवतां पावकप्रतिष्ठेति दृश्यते ॥

जित्रजटः ॥ (विहस्य) किं बहुना ? सन्ध्यावन्दनमपि कदाऽपि लुप्तं स्यात्, का पुनर्व्रतादीनां लोपवार्ता ?

दीर्घकर्णः ॥ किमु वक्तव्यं दानविषये ; युधिष्ठिरसहोदरैरुत्स्वाय दानार्थं मेरुरेव समानीत इति ज्ञायते ॥

शतमाली ॥ स्यादेतत् । कोशागारं सत्वरं शून्यं भवत्विति धनाध्यक्षेण सुयोधनेन समत्सरं विप्रेषु यथेच्छं धनकनकवृष्टिः पातिता, तथाऽपि वासुदेवानुग्रहात् सततसम्पूर्णमेव तत् ॥

चित्रजटः ॥ (सौदासीन्यं) किं फलमनेन बहुना कृतेन ? सर्वमन्ते निष्ठुरे कर्मणि पर्यवसितम् ॥

पिङ्गकेशः ॥ (ससम्भ्रमं) किं तत् ?

चित्रजटः ॥ शिशुपालवधः ॥

पिङ्गकेशः ॥ (साश्चर्यं) अपि नाम सत्यम् ?

चित्रजटः ॥ किमनृतमपि ब्रवीमि ?

पिङ्गकेशः ॥ (सादरं) तर्हि कथय कथय कथं स हतः कुतो वा केन हत इति च ॥

चित्रजटः ॥ अवभृथानन्तरं युधिष्ठिरेण महती सभा कारिता ; तत्र तावत्प्रथमं को वा सभाजयितव्य इति समुदचरच्चर्चा ॥

पिङ्गकेशः ॥ (विहस्य) कुतो वाऽत्र चर्चा ? यश्च सार्वभौमो नृपकुलचूडामणिर्वा स एव सभाजयितव्यः ॥

चित्रजटः ॥ (सस्मितं) हुं ! भवानेव धीमान् खलु, तर्हि कथयतु तत्र को वा सभाजयितव्यः को वा सार्वभौमः ? नृपकुलचूडामणिश्च कः ?

(पिङ्गकेशश्चुबुके निहिताङ्गुळिर्गगनदत्तदृष्टिस्स्तम्भीभूय सुचिरंविचिन्तयति) ॥

शतमाली ॥ (विहस्य सशीर्षान्दोलनं सोल्लुण्ठनं च) कुतो वाऽत्र चिन्ता ? सत्वरं कथय । अल्पीयान् खलु विषयः ॥

पिङ्गकेशः ॥ (विचिन्त्य) कौरवेश्वरो धृतराष्ट्रस्सार्वभौमः । तत्स एव सभाजयितव्यः ।

चित्रजटः ॥ (सस्मितं सशीर्षान्दोलनं) हन्त ! केन वा दत्ता तस्य सार्वभौमपदवी ? किमु भवता ? तस्यान्धत्वान्नास्ति हि राजत्वमेव ॥

पिङ्गकेशः ॥ (सलज्जं विचिन्त्य) शिशुपालस्सार्वभौमः । तत्स एव सभाजयितव्यः ॥

शतमाली ॥ तर्हि तत्र नास्त्येव कोऽप्यन्यो नृपचक्रे ? ॥

चित्रजटः ॥ (विहस्य) पश्यात्रैव चर्चा समुत्पन्ना ॥

पिङ्गकेशः ॥ भवतु किमनया चर्चया ? प्रकृतं ब्रूहि । ततस्ततः ॥

चित्रजटः ॥ ततस्समुत्थाय धीमता कुशलिना सहदेवेन सर्वजगत्पतिश्श्रियःपतिर्भगवान् वासुदेवस्सभाजयितव्य इति समुद्घुष्य निर्धारितम् । अनुपदमेवाग्रपूजां कर्तुमपि प्रयतितम् ।

पिङ्गकेशः ॥ [सवैलक्ष्यं] अहो ! धैर्यं तस्य; अहो ! बुद्धिवैभवम् । स एव ज्ञानी; यतः पुरुषान्तरं विहाय यज्ञपुरुषं पुरुषोत्तममाराधयितुमुद्युक्तोऽभवत् । हन्त ! न स्फुरति स्म ममेदं; ततस्ततः ॥

चित्रजटः ॥ (सस्मितं) कथं वा तव परिस्फुरेत् ? हुं ! भवतु, शृणु तावत् । ततश्च प्रकुपितशिशुपालो झडिति समुत्थाय पाणिमुरसि निधाय—

"मयि सति नृपनाथे सिंहपीठेऽग्रपूजा
भजति कथमिवैनं राज्यलक्ष्म्या विहीनम् ।
विलसति मृगराजे मत्तमातङ्गकुम्भे
व्रजति किमु सृगालं कुम्भसंस्था तु मुक्ता ? ॥२ ॥

(अपिच)
गोमयवहने दक्षो जारः परकन्यकापहर्ता च ।
सिंहासनानधीशः स तु पूज्योऽभूत्सभामध्ये" ॥ ३ ॥

इत्यादिरीत्या बहून्यश्रुतपूर्वाण्यवचनीयानि जल्पितवान् ॥

पिङ्गकेशः ॥ तदा भगवता वासुदेवेन किं व्यवसितम् ?

चित्रजटः ॥ (सवैलक्ष्यं) मन्दस्मितमधुरमधुरमुखारविन्दो भगवान् वासुदेवस्सभामभितः प्रेरितनयनस्तूष्णीमासीत् ॥

पिङ्गकेशः ॥ (साश्चर्यं) हन्त ! महानुभावता भगवतः ! क्षान्तिरस्य पुलकितमातनोति मद्गात्रम् । ततः ।

चित्रजटः ॥ सहदेवेन पुनरनुपदमेव वासुदेवाय समर्पिता सपर्या ॥

पिङ्गकेशः ॥ अहो ! तस्य धैर्यम् । ततश्शिशुपालेन किं व्यवसितम् ?

चित्रजटः ॥ ततः कृष्णवर्जं सहदेवं युधिष्ठिरं चोपालब्धुं समारभत सः चेदिराजः ॥

पिङ्गकेशः ॥ (सभयं) हन्त ! किमिति ?

**चित्रजटः** ॥ "भवतु । न निन्द्योऽयं गोपः । किमनेन क्रियते ? अत्रासमीक्ष्यकारी युधिष्ठिरो निन्द्यः, इतिकर्तव्यतामूढो बालो बालिशस्सहदेवश्च; यतस्सहदेवस्सत्सु बहुषु राजाधिराजेषु तानन्तरा हालिकलालनीयमेकं गोपालकमभ्यर्च्यास्माकं मनःक्षोभमापादितवान्" इति ॥

**पिङ्गकेशः** ॥ किं तावत्ताभ्यां तदा कृतम् ?

**चित्रजटः** ॥ ताभ्यां तु न किमप्याचरितम् । तूष्णीमेव स्थितम् । भगवान् वासुदेवः परं भक्तपराधीनः क्रोधद्विगुणितारुणिमशोभिनयनारविन्दः प्रस्फुरदरुणाधरबिम्बस्सरभसमुत्थाय "एतावन्तं कालं मामुद्दिश्याश्रुतपूर्वाण्यवहेळनगर्भाणि वचनानि जल्पितान्यनेन बालिशेनाबलाजनेनेव । तैरतावन्न मे मनःखेदस्समजनि; यन्मद्भक्तानां पाण्डवानामवहेळनं तदतितरां मनः खेदयति । तदिदानीं न सहे" इत्युक्त्वा सुदर्शनमस्मरत् ॥

**चित्रजटः** ॥ ततो भास्करसहस्रभासुरं सुदर्शनमचिरादेव व्यतानीत्तादिव्यं श्रीकृष्णागिराङ्गे । तत्क्षणे— "हन्त ! निपतितश्चेदिराजः हा हतशिशुपालः"— इति हाहाकारपूरिता सभा ॥

**पिङ्गकेशः** ॥ हन्त ! तद्वृत्तं श्रोतारमेव कम्पयति, द्रष्टॄणां तु तदा कथं वाऽभूत् ? ततस्ततः ।

**चित्रजटः** ॥ अनुपदमेव तर्जनीमुखेन परिभ्राम्य तच्चक्रं शिशुपालकन्धरां प्रति प्राहिणोत् ।

**पिङ्गकेशः** ॥ ततः किं प्रष्टव्यम् ? अप्रतिहतं हि तद्दिव्यायुधम् ।

**चित्रजटः** ॥ वक्तव्यमपि न । तत्कन्धरां कदळीलावं लूत्वा न्यपातयदेव तस्य शिरः क्षितितले ।

**शतमाली** ॥ चित्रमेतत् । तत्क्षणमेव तत्कण्ठतः कोऽपि तेजस्समुदयस्समुत्थाय श्रीवासुदेवचरणसरसिजसन्निधिं प्राप्नोत् ।

**पिङ्गकेशः** ॥ (साश्चर्यं) हन्त ! स एव धन्यः, यतो योगिजनैरप्यलभ्यं श्रियःपतिचरणारविन्दमलभत ।

**चित्रजटः** ।। (सहासं सहस्तताळं च) भवत्वेतत् । सभायां महाराज-दुर्योधनस्य भ्रान्तिं किं ब्रवीमि ? स्थले जलभ्रान्तिः, जले स्थलभ्रमः, द्वारे भित्तिभ्रान्तिः, भित्तौ द्वारभ्रमश्च ।

**पिङ्गकेशः** ।। (सवैलक्ष्यं सादरं च) कथय कथय कथं तत् ।

**चित्रजटः** ।। शृणु तावत् । सतु दुर्योधनस्सभामध्ये युधिष्ठिरेण सादरं समाहूतस्तत्सकाशं जिगमिषुरुत्थाय—

क्षोणीं नीलोपलाढ्यां सलिलमितिधिया मन्दमुत्क्षिप्य चेलं
स्पृष्ट्वा पादेन सद्गीस्सरसि सकमले भूधिया निर्ममज्ज ।
उत्थायान्यत्र यातुं त्वरिततरगतिर्द्वारमत्याऽथ भित्तिं
द्वारं भित्तिभ्रमेण प्रविचलितभुजः काणवच्चालिलिङ्ग ।।४।।

तदा सर्वेषामपि तत्रत्यानामुदरमतिहसितेन व्रणितमभवत् ।

**पिङ्गकेशः** ।। (सताळहासं) हन्त ! किमिदं तादृशस्य धीमतोऽपि तस्यैवं मतिविभ्रमः ? ।

**चित्रजटः** ।। किं न जानासि यस्य मात्सर्यकलुषितं हृदयं, मयनिर्मिता सा तु सभा प्रतिभाति तस्य विपरीतेति ?

**पिङ्गकेशः** ।। (नेपथ्याभिमुखमवलोक्य सभयं) पश्यन्तु भवन्तः, अस्मदाचार्यपिङ्गळपादाः कमपि भारमुद्वहन्त इत एवाभिवर्तन्ते । तदलमनया वार्तया ।

(ततः प्रविशति यथा निर्दिष्टः पिङ्गळगुरुः)

**पिङ्गळः** ।। (दीर्घं निश्श्वस्य—श्रममभिनीय) धिगन्तेवासिनः ? यागे मत्साह्यार्थं पञ्चषाश्शिष्याः पृष्ठतस्समानीतास्तेषां बालिशानां त्वेकोऽपि न मे दृष्टिपथमारूढः कार्यं करणीयमितिभयात् । (विहस्य) हन्त ! सर्वेऽपि चोराग्रगामिनः । भवतु क्वापि प्रच्छाये भारमेनमवतारयामि । (इति कतिचित्पदानि गत्वा वृक्षमूलगतान् शिष्यानवलोक्य) अये ! सर्वेऽपि मिळिताः

शिष्या अत्रैव वर्तन्ते । भवतु तावदस्य कस्य चिदुपरि भारमेनं पातयामि (इति सहसोपसृत्य सक्रोधं] अरे ! कुत्रा कालमेतावन्तं प्रलीनाः ? न यूयमन्तेवासिनः किन्तु चोराः ॥

(सर्वे भिया तूष्णीमासते)

पिङ्गळः ॥ भवतु नाम, भारमेनं कोऽप्यवतारयतु मन्मस्तकात् ।

(चित्रजटः सहसोपसृत्य--भारमवतारयति)

पिङ्गळः ॥ (दीर्घं निश्श्वस्य तत्रैवोपविश्य पिङ्गकेशमवलोक्य) अपि नाम मया निहितं धनमखिलमपि रक्ष्यते त्वया ?

पिङ्गकेशः ॥ (सभयं सविनयञ्च) आम् । सुरक्षितम् ।

पिङ्गळः ॥ (क्षणमित्र विश्रान्तिसुखमनुभूय) नायमवसरोऽत्र समुपवेष्टुम् । इदानीं मध्येमार्गं दुर्योधनस्समनुभूतपरा भवो विमनायमान इत एव मन्दमागच्छन् दूरतस्समदृश्यत । तदत्रैव समागच्छेदपि (अग्रतोऽवलोक्य) हन्त ! समायात एव, तत्साधयामः (इति सत्वरमुत्थाय भारमादाय निष्क्रान्तास्सर्वे) ॥

(इति शुद्धविष्कम्भः)

---

(ततः प्रविशति यथानिर्दिष्टस्सुयोधनः)

सुयोधनः ॥ हन्त ! धिङ्माम्, किमिति सुधांशुवंशे कळङ्क इव समुत्पन्नोऽस्मि ? किं वा भारावहेनानेन जन्मना ? शत्रुसम्पदमपरिमितां दर्शंदर्शं कथमिवाद्यापि प्राणिमि ? हन्त ! असङ्ख्यातनरपतिसमलंकृतायां सभायां संवृत्ता त्ववमानना कुकूलानलवद्दन्दह्यते मे हृदयं (विचिन्त्य) अनेन वृथा जन्मना न किमपि प्रयोजनं पश्यामि । तत्सन्त्यक्ष्यामि यत्र कुत्राप्यरण्ये प्रळीनः प्राणान् । (पुनरपि विचिन्त्य सविमर्शं) क्षत्रियकुलोत्पन्नस्य मे नायं समुचितो व्यापारः; तद्यथाकथञ्चिन्मया ते पाण्डवपशवो वशीकृत्य निश्च्युतसाराः

करणीयाः । किं करोम्यद्य ? [अग्रतोऽवलोक्य सहर्षम्] एते कर्णदुश्शासन-शकुनयोऽनामन्त्र्य समागतं मामन्विष्यन्त इत एवाभिवर्तन्ते । तत्प्रकुपित-इवासिन्ननोकहप्रच्छाये समुपविशामि । ततो मिळितैरस्माभिर्दुर्मन्त्रबलात्ते धर्मादयो वशीकरणीयाः (इति तथोपविशति) ॥

(ततः प्रविशन्ति दुश्शासन–कर्ण–शकुनयः)

**दुश्शासनः** ॥ क्व गतो महाराजदुर्योधनः ? नाद्याप्यस्मन्नयनगोचरः । हन्त ! स तु मानी खलु क्वापि पराभवमसहमानस्त्यक्तप्राणो भवेत् ।

**कर्णः** ॥ तात ! दुश्शासन ! अलं सम्भ्रमेण ; स तु त्यक्तप्राणो न स्यात् । अन्विष्यद्भिरस्माभिर्लभ्येतैव । तन्मा कातरो भव; धैर्यमवलम्बस्व ।

**शकुनिः** ॥ (क्षितितलमवलोक्य) वत्स ! दुश्शासन ! पश्यात्र नरपतिचरणलक्ष्मेव दृश्यते ; तदनेनैव पथा महाराजः प्रचलितो भवेत् । तदत्रैवान्विष्यामः ।

**दुश्शासनः** ॥ (सगद्गदम्) मातुल ! किमत्र वने कार्यं तस्य ? यदि किमपि स्यादस्माकमनिवेद्य न कदाऽप्येकाकी स गच्छेत् खलु ।

**शकुनिः** ॥ (सशिरश्चालनं) तत्तु सत्यं ; इदानीं पुनरनुभूताभिभवो-ऽत्र विविक्ते क्वापि प्रलीनस्स्यात् । पश्यामः ।

(पुरतः कतिचित्पदानि सर्वे गच्छन्ति)

**कर्णः** ॥ (अग्रतोऽवलोक्य सहर्षं) तात दुश्शासन ! अलं चिन्तया । पश्यतु भवान् भवदग्रजं वृक्षप्रच्छाये निषण्णं महाराजदुर्योधनम् (इत्यङ्गुल्या निर्दिशति)

(सर्वे सहर्षं समुपसर्पन्ति)

**दुश्शासनः** ॥ (प्रणम्य) आर्य ! सति राज्ये गजरथपत्तिवाहे च कुतो वा भवानेकाकी समुपविशत्यत्र ?

(दुर्योधनश्शिरसि निधाय पाणियुगळं मूक इव तूष्णीमास्ते)

**दुश्शासनः** ॥ (सविनयं) आर्य ! किमिदमुचितं ते ? मयि प्रार्थ्यमाने तूष्णीमास्यते भवता ? तन्मधुरया गिरा मदीयं श्रवणयुगळमानन्दयतु भवान् ।

**कर्णः** ॥ (दुर्योधनहस्तं गृहीत्वा) महाराज ! शशिकुलतिलक ! भवद्विषये केन वा कृतोऽपराधः ? मयि सुहृदि स्थिते कुतस्तेचिन्ता ? किं न जानासि माम् ?

एकेन बाणेन नयामि मृत्युं
महेन्द्रमप्याशु कृतापराधम् ।
किं चिन्तया खेदयसि स्वचित्तं ?
यस्तेऽपराधी स गतायुरेव ॥ ५ ॥

**दुर्योधनः** ॥ (दीर्घं निश्श्वस्य—दुश्शासनमवलोक्य) वत्स ! किमुक्तं भवता ? "सति राज्ये गजरथपत्तिवाहे च कुतो वा भवानेकाकी समुपविशत्यत्र" इति खलु । श्रृणु तावत्—

किं राज्येन ? पदातिवारणरथप्रोद्दण्डवाहेन किं ?
कोशागारनिरन्तरार्जितधनैः किं वा ? प्रभुत्वेन किम् ?
किं प्राणैः ? किमु बन्धुभिः किमनुजैः ? किं वा सुहृद्भिश्चमे ?
तानालोकयतः कृतामितपरीभावान् रिपूनीश्वरान् ॥ ६ ॥

(कर्णमवलोक्य) सुहृद्वर्य ! जानाम्येव भवन्तमङ्गराजं राधेयं, जानामि च विपुलरिपुकुलबलमूलोत्पाटनेऽतुलबलशालिनम् (सोल्लुण्ठनं)

बाणः क्व लीनस्तव पौरुषं वा
तदा ! क्व लीनं ननु ! मित्रवर्य ।
यदा गदाघातनिबन्धनादि-
र्भीमेन पीडा महती कृता नः ॥ ७ ॥

तदलं; किमनेन विकत्थनेन ?

(कर्णोऽवनमितमस्तकस्तूष्णीमुपविशति)

शकुनिः ॥ तात ! सुयोधन ! किमिदम् ?

पर्यङ्कं मृदुलतरोपधानभोग्यं
मिष्टान्नं वररमणीकरोपनीतम् ।
त्यक्त्वा त्वं कटुफलकण्टकोपलाढ्ये
दुर्गे वा ! कथय कथं निवत्स्यसीह ॥ ८ ॥

दुर्योधनः ॥ मातुल ! अलं निर्बन्धेन । विपिनमिदं विहाय न पदात्पदमपि प्रचलेयम् । जीवत्सु विपक्षेषु महोन्नतां सम्पदमनुभवत्सु भवदुक्तमखिलमपि मे तृणकल्पम् ॥

दुश्शासनः ॥ (सबाष्पं) आर्य ! यद्येवं भवदेकजीवितं तातं धृतराष्ट्रं प्रति किं वदेयम् ?

दुर्योधनः ॥ वत्स ! एवं निवेदय—

वनं राज्यं वृक्षो नृपभवनमासीत्किसलयं
सुतल्पं पाकाढ्यं फलमशनमेवं मृगगणः ।
सुहृत्पत्रिप्रोद्यन्मधुरविरुतिर्गानमनिशं
रिपुप्राप्तावज्ञाविकलमनसस्त्वत्तनुभुवः ॥ ९ ॥—इति॥

शकुनिः ॥ (स्वगतं) हन्त ! वनवास एवानेन निर्धारित इव लक्ष्यते । किमद्य करणीयम् ? (विचिन्त्य) ज्ञास्यामि तावदाशयमस्य । (प्रकाशं) वत्स ! सुयोधन ! किं कृतं चेत्त्वमागमिष्यसि नगरम् ?

दुर्योधनः ॥ (सौदासीन्यं) मातुल ! न कोऽपि शक्नोति तत्कर्तुं, किं तेन विचारेण ?

शकुनिः ॥ वत्स ! न हि तथा । अहं पुनश्शक्तस्तत्कर्तुं, तन्निवेदय, किं पिहितेन ?

**दुर्योधनः** ॥ तर्हि श्रृणु तावत्—

पाण्डवानां वशीकृत्य
सर्वां सम्पदमद्भुताम् ।
मद्वशे दासभावं च
तेषां कल्पय मातुल ! ॥ १० ॥

**शकुनिः** ॥ (स्वगतं) हन्तास्य महती सङ्कल्पपरम्परा । यद्यस्य मनोरथं नाहं पूरयेयं, तदाऽयं नायायान्नगरम् । किमद्य करोमि ? (विचिन्त्य सहर्षं) उपायस्समुपलब्धः ; (प्रकाशं) वत्स ! भवन्मनोरथं पूरयामि ॥

**दुर्योधनः** ॥ कथमिव ?

**शकुनिः** ॥ युक्तिश्चिन्तिता ; श्रृणु तावत्—

धर्मोऽधिपस्तदनुजास्तमनुव्रजन्ति
युक्त्या तदग्र सुपिरे स तु पातनीयः ।
युक्त्या गजान् गहनगानपि सङ्ग्रहीतुं
गर्ते हि यूथपतिमाशु निपातयन्ति ॥ ११ ॥

तद्द्यूतप्रियो युधिष्ठिरः; किं च तेन "येन केनापि यद्यहं समाहूतः स्याम् कैतवविहाराय, तदागमिष्याम्येव" इति प्रतिज्ञातम् । तद्युधिष्ठिरमाहूय समारभ्यतां भवता कैतवम् । अहं पुनरक्षप्रक्षेपणनिपुणो धर्मराजेन पणीकृतं सकलमपि भवते दापयामि । भवत्सकाशे तस्य दास्यमपि सम्पादयामि । तदनु तदनुजा वशीकृता एव भविष्यन्ति । अत्र न कोऽपि सन्देहः ।

**दुर्योधनः** ॥ (सहर्षं) साधु ! मातुल ! साधु; प्रबलान् रिपूननायासेन वशीकरोषि । तथाऽपि किञ्चिद्वक्तव्यमस्ति ॥

**शकुनिः** ॥ कथय कथय किं तत् ?

**दुर्योधनः** ॥ दासभावे पञ्चसु यः कोऽपि प्रकुपितः प्रतीपो यदि भवेत्तदा तेषां हायनमेकं वनवासो विधेयः ॥

शकुनिः ॥ (विहस्य) स्यान्नाम। कोऽत्र विचारः?

दुर्योधनः ॥ (स्वगतं) हन्त! संवत्सरानन्तरं पुनरपि ते राज्यमाक्रमिष्यन्त्येव; अतस्तेषामनवरतमपि वनवासो दासभावो वा स्थिरीकरणीयः। तस्मादेवं ब्रवीमि (प्रकाशं) मातुल! अन्यदपि वक्तव्यमस्ति ॥

शकुनिः ॥ ब्रूहि वत्स!

दुर्योधनः ॥ नियतैकहायनाभ्यन्तरे तैरस्मद्देशाद्बहिः क्वापि सम्पाद्य द्रविणनिचयं तेनास्मत्कोशागारं पूरणीयम्। नोचेत्पुनरपि दास्यमेव तेषाम्। यदि दास्ये यः कोऽपि प्रकुपितस्स्यात्पुनरपि वनवासः; वनवासेऽपि स एव पूर्ववन्नियमः ॥

शकुनिः ॥ तथैवास्तु; उत्तिष्ठ कर्तव्यसाधनाय ॥

दुर्योधनः ॥ (सविमर्शं) अत्र कश्चन मे संशयः ॥

शकुनिः ॥ (सभ्रूभङ्गं) किमिदं संशयस्संशय इति संशयग्रस्तोऽसि? किं न श्रुतं भवता— "संशयात्मा विनश्यति"— इति?

दुर्योधनः ॥ तत्सत्यमेव; तथाऽप्यस्मत्तातपादा अनुमन्वते वा न वेति मे सन्देहः ॥

शकुनिः ॥ वत्स! मा भैषीः। तदनुमतिमपि कथञ्चित्सम्पादयामि ॥

(नेपथ्ये रथध्वनिः)

दुश्शासनः ॥ (नेपथ्याभिमुखमवलोक्य) आर्य! अस्मत्तातपादा भवन्तमन्वेषमाणा रथेनेत एवाभिवर्तन्ते ॥

शकुनिः ॥ (ससम्भ्रमं) वत्स! तर्हीदानीमेवमाचर। अस्माभिरभ्यर्थ्यमानोऽपि वनवासे कृतनिश्चय इव प्रागवद्विषण्णहृदयः पित्रा प्रार्थितोऽपि तूष्णीमुपविश। ततश्च करिष्याम्यहमनन्तरकरणीयम् ॥

दुर्योधनः ॥ (सहर्षं) मातुल! तथाऽस्तु ॥

(ततः प्रविशति यथानिर्दिष्टो धृतराष्ट्रः)

धृतराष्ट्रः ॥ सारथे ! वाहान् सत्वरं प्रेरय ॥

सूतः ॥ आयुष्मन् ! समुद्दिष्टां भूमिमागतौ स्वः ॥

धृतराष्ट्रः ॥ सारथे ! राजसूयनिवृत्तेभ्यः कतिपयेभ्यो विप्रेभ्यश्श्रुत्वा सुयोधनमत्रत्यमागतोऽसि । किमत्र वर्तते वत्सः ?

सूतः ॥ आयुष्मन् ! नात्र दृश्यते कुमारः ॥

धृतराष्ट्रः ॥ (सबाष्पं) सारथे !

अभिभवमनुभूय शत्रुवर्गात्
स तु विपिने विमना विसृज्य राज्यम् ।
मुनिजनसदृशो भवेद्धि मानी
किमुत निजासुजिहासया गतस्स्यात् ॥ १२ ॥

न सहे तद्विरहम् । तद्भवान् रथादवरुह्य—

गुहासु कासारतटीषु वत्सं
लतादिगुल्मेषु महीध्रशृङ्गे ।
अनोकहानामथ मूलदेशे
परिभ्रमन् पश्यतु सावधानम् ॥ १३ ॥

सूतः ॥ यथाऽऽज्ञापयत्यायुष्मान् (इति रथादवरुह्य कति चित्पदानि गत्वा—अग्रतोऽवलोक्य सहर्षं) हन्त ! दिष्ट्या समुपलब्धः कुमारः । किमपि तत्र ते सर्वेऽपि वदन्ति । (इति कर्णं दत्वा) हन्त ! धृतराष्ट्राय तावन्निवेदयामि (इति प्रतिनिवृत्य धृतराष्ट्रमुपसृत्य) आयुष्मन् ! दिष्ट्या वर्धसे, दृष्टः कुमारः ।

धृतराष्ट्रः ॥ (सहर्षं सत्वरं) कुत्र दृष्टो वत्सः ? किं करोति ? कथं वर्तते ? क्षिप्रमावेदय ॥

सूतः ॥ आयुष्मन्! दुश्शासनराधेयशकुनिभिः प्रार्थ्यमानोऽपि नगरगमनाय, विपिनमिदं विहाय न पदात्पदमपि प्रचलेयमिति कृतनिश्चयो विषण्णहृदयः पादपप्रच्छाये नातिदूरे निषण्णो वर्तते ॥

धृतराष्ट्रः ॥ (सबाष्पं) हन्त !

तेषामेव सुतो वाचं
न शृणोति यदीह नः ।
कथं शृणोति वाचं वा ?
न जाने मूर्खनिर्णयम् ॥ १४ ॥

(दीर्घं निश्श्वस्य) तथाऽप्यभ्यर्थयामहे । सारथे ! स्यन्दनं सत्वरं नय तं देशं, यत्र मे वत्सस्तिष्ठति ॥

सूतः ॥ तथा (इति सुयोधनान्तिकं रथं नीत्वा) रथान्मन्दमवतरत्वायुष्मान् (इति हस्तं गृहीत्वा मन्दं रथादवतारयति) ॥

धृतराष्ट्रः ॥ (सत्वरं) वत्स ! भवद्विरहदुःखितस्य मे गात्रमाश्लिष्य पीवरभुजाभ्यां सन्तापमपाकुरु (इत्यङ्गराजं कराभ्यां परामृशति) ।

अङ्गराजः ॥ देव ! कर्णोऽस्म्यहम् (इत्यपसरति) ।

धृतराष्ट्रः ॥ क्वासि वत्स ! सुयोधन ! (इति गगने प्रसारितकरोऽन्वेषणं नाटयति) ।

दुश्शासनः ॥ तात ! अयं सुयोधनः; (इति धृतराष्ट्रपाणिमवलम्ब्य सुयोधनं स्पर्शयति)

धृतराष्ट्रः ॥ (सहर्षं) वत्स ! सुयोधन !

राज्यं त्वराजकमभूदधुना विना त्वां
तद्याहि मद्वचनतः प्रियमातनोमि ।
यद्याशयं प्रकटयेस्तदनु प्रवृत्ति-
स्तत्पूरणे ननु भविष्यति मौनतः किम् ! ॥ १५ ॥

तदुत्तिष्ठ; निवेदय निजाशयम् ॥

(इत्याचूडपादं परामृशन्) निवेदय वत्स ! कर्तुं सिद्धोऽस्मि ॥

(दुर्योधनस्तूष्णीमास्ते)

**शकुनि** ॥ (धृतराष्ट्रं विलोक्य) शृणोतु देवः; महाराजोऽयं सुचिरमस्माभिर्बहुधाऽभ्यर्थित एवमन्तेऽभिहितवान्—

"पाण्डवानां वशीकृत्य
सर्वां सम्पदमद्भुताम् ।
मद्वशे दासभावं च
तेषां कल्पय मातुल !"—इति ॥

**धृतराष्ट्रः** ॥ वत्स ! सुयोधन ! शृणु तावत् । ते तु —

धीराश्शूराः प्रगुणविनयव्याहृतिप्राप्तरागा
भूमिस्सर्वा जलधिवलया तद्वशे वर्ततेऽद्य ।
तेष्विन्द्रं वा निजभुजबलाज्जेतुमेकस्समर्थ-
स्तत्तान् जेतुं प्रभवसि कथं ? नैव चिन्त्यं तदेतत् ॥१७॥

तदलं तद्यत्नेन ॥

**दुर्योधनः** ॥ (सक्रोधं) भवतामनवरतमपि तेषां गुणकथन—पराक्रमवर्णन—सौजन्यविस्तरण—वैभवाभिभाषणान्येव कालयापनोपायः । तत्त एव राजानस्सन्तु, नाहं राजा । अत एव विपिनशरणोऽस्मि । गच्छन्तु भवन्तः-पाण्डवानां सकाशम् ॥

**धृतराष्ट्रः** ॥ वत्स ! कोपं मा कृथाः । तेषामधुनातनीं स्थितिमनुरुध्य मया कथितं, न तु प्रीत्या । ते तु युक्त्या वशीकरणीयाः, न पुनः पराक्रमेणेत्यत उक्तम् ।

**शकुनिः** ॥ देव ! युक्तिस्तावन्मया चिन्तिता ॥

**धृतराष्ट्रः** ॥ का युक्तिः ? कथय ॥

शकुनिः ॥ शृणोतु देवः—

“ धर्मोऽधिपस्तदनुजास्तमनुव्रजन्ति
युक्त्या तदद्य सुषिरे स तु पातनीयः ।
युक्त्या गजान्गहनगानपि सङ्ग्रहीतुं
गर्ते हि यूथपतिमाशु निपातयन्ति ॥ १८ ॥

युधिष्ठिरोऽपि “ द्यूतविहारार्थं केनाप्याहूतो न परावर्ते” इति प्रतिज्ञातवान् । तदद्यानेन तव पुत्रेण दुर्योधनेन समाहूतस्समागमिष्यत्येव । ततश्चैताभ्यामारब्धे च द्यूते धर्मपुत्रेण पणीकृतं सकलमपि क्षणादक्षप्रक्षेपणनिपुणोऽहं भवत्तनयवशं करिष्यामि । सर्वस्मिन्नपि वस्तुनि पणीकृते पणेयवस्त्वन्तराभावादनुजानपि द्रौपदीं चान्ततस्त्वात्मानमपि धर्मराजः पणीकरिष्यति । तस्मिन्पराजिते सत्येवं नियमः कार्यः—दासभावे पञ्चसु यः कोऽपि प्रकुपितः प्रतीपो यदि भवेत्तदा हायनगेकं तेषां वनवासो विधेयः । नियतैकहायनाभ्यन्तरे अस्मद्देशाद्बहिः क्वापि सम्पाद्य द्रविणसम्भारं तेनास्मत्कोशागारं पूरणीयम् । तथा नो चेत्पुनरपि दासभाव एव । एवमेव चक्रवत्परिभ्रमः कार्यः । इत्थं नियते च नियमे भवत्तनयस्य स्थिरीभविष्यति सार्वभौमपदवी”— इति ॥

धृतराष्ट्रः ॥ (सप्रमोदं) साधु; शकुने ! साधु; नीतिज्ञोऽसि । ममापि हीदमुचितमिव प्रतिभाति । किं चात्र ममायमाशयः—“ते तु शक्ताः कुबेरं वा विजित्यास्माकं कोशागारं द्रविणेन पूरयिष्यन्त्येव । ततश्च पुनरपि तद्वशा भविष्यन्ति सर्वास्सम्पदः । अतस्तैरार्जितानां द्रविणानामन्यथा परिच्यवनं कार्यम् । तदानीं तेषां वनवास एव स्थिरीकृतो भविष्यति । तदद्य दुर्वाससं सपर्यया तोषयित्वा वने वसद्भिस्तैरार्जितनां द्रविणानामादानार्थमभ्यर्थयामहे”—इति ॥

(सर्वे-सप्रमोदं) प्रियं नः प्रियं नः (इत्युत्तिष्ठन्ति) ॥

**धृतराष्ट्रः** ॥ अपि नाम दुर्योधनोऽप्युदचलत् ?

**दुश्शासनः** ॥ अथ किम् ?

**धृतराष्ट्रः** ॥ तर्हि सर्वेऽप्यारोहन्तु स्यन्दनम् ॥

**दुश्शासनः** ॥ आरोहतु भवान् (इति धृतराष्ट्रमारोप्य सुयोधन-शकुनि-कर्णैस्सह स्वयमप्युपविशति) ॥

**दुर्योधनः** ॥ (स्वगतं)—

कैतवे तन्त्रजालेन
वशीकृत्य वृकोदरम् ।
यथेच्छं मर्दयाम्यद्य
नः प्राक्कृतपराभवम् ॥ १९ ॥—इति॥

(निष्क्रान्तास्सर्वे)

**इति श्रीयदुशैलवासि-बालधन्वि-जग्गू-वकुळभूषणकवि-विरचिते अद्भुतांशुकनाटके द्वितीयोऽङ्कः ॥**



॥ श्रीः ॥

# तृतीयोऽङ्कः ॥



(ततः प्रविशत्युद्यानभवनगत एकासनोपविष्टया द्रौपद्या सह भीमसेनः)

**भीमः ॥** (सस्मितं प्रियामुखमवलोक्य) प्रिये ! कर्त्तव्यं सर्वमपि कृतमेव हि।

राजानो विजिताः प्रसिद्धयशसोऽप्यार्यस्य निघ्नाः कृता-
स्सख्यं मद्गदया प्रकल्प्य निखिलक्ष्माभृद्गता श्रीरपि।
अंसं सेव मदीयमुच्चमचिरादारोपिता चादरा-
न्निष्प्रत्यूहमिहाध्वरोऽपि विधिवन्निर्वर्तितो धर्मतः ॥१॥

(किञ्च)

आर्ये दृढं भुजलतापरिरम्भणेन
लक्ष्मीस्त्वकं प्रकटयत्यधुना ऽनुरागम्।
आज्ञान्तु तस्य वयमप्यनुजा विधातुं
सर्वात्मना परिजना इव बद्धदीक्षाः ॥ २ ॥

**द्रौपदी ॥** [1] (सलज्जं) अज्जउत्त ! तुइ ठिदे किंवा ण होइ; इदो वरं करणिज्जं कज्जं ण किंवि वट्टेदि । वसीकिदा समुद्दमेहळा पुढवी; णिव्वट्टिदो जण्णो; ता दाणिं रज्जसोक्खं अणुहोन्तेहिं तुम्हेहिं होदव्वं ॥

**(प्रविश्य कंचुकी)**

(कञ्चुकी)

(सबाष्पं) हन्त ! कुतो वा पाण्डवानां राज्यसौख्यं; नायं धर्मस्य कालः; वञ्चकपक्षपाति खलु दैवं; हन्त ! दुरोदरकैतवेन सर्वस्वमप्यपहृत्य

---

(छाया) 1 आर्यपुत्र ! त्वयि स्थिते किंवा न भवति। इतःपरं करणीयं कार्यं न किमपि वर्तते। वशीकृता समुद्रमेखला पृथिवी; निर्वर्तितो यज्ञः; तस्मादिदानीं राज्यसौख्य-मनुभवद्भि र्युष्माभि र्भवितव्यम् ॥

दुर्योधनहतकेन शोचनीयदशां प्रापितो युधिष्ठिर इति कथमद्यानेन वक्त्र-हतकेन निवेदयामि वृकोदराय । भवतु नामैतत् । स तु दुर्योधनहतको ऽनुभूय परिभवं गतः ; कथं वा पुनरपि निर्लज्ज इन्द्रप्रस्थमे-वासाद्याक्षदेवनाय युधिष्ठिरमाहूतवान् । स्यान्नामैतदपि । स तु महाराज-युधिष्ठिरः कथं वा भीमेऽप्यसन्निहिते तेन समाहूतो देवनाय गतः । (सशीर्षचलनं) हुं ! किं बहुना, सर्वमिदं विधिविलसितं हि ; यदि कुमार-भीमस्सन्निहितो भवेत्तदा नैवावकाशस्स्यादीदृशस्यानर्थस्य । हन्त ! न पारयामि निवेदयितुं । प्रभोराज्ञा परं बलवती । किं करोम्यद्य जीवनकृते विक्रीतशरीरोऽहं । धिगीदृशदुःखजननीं सेवाम् । सर्वथा गर्हितस्सेवकश्शुनकवत् । तथाहि—

जगतीह सेवकजनस्य तु प्रभु-
हृदयेन साकमखिलेन्द्रियाणि च ।
अपहृत्य नर्तयति पुत्रिकामिव
स्ववशे निधाय तमतस्स गर्हितः ॥ ३ ॥

किं बहुना जल्पितेन ; असत्प्रभुनियोगमनुतिष्ठामि । क्वेदानीं स्या-त्कुमारवृकोदरः—(इतिपरिक्रम्य सहर्षं) ।

प्रमदसूचकलोचनपङ्कजः
प्रमदया लसतीह वृकोदरः ।
मदभरादरकोरकितेक्षण-
स्स्ववशया वशयेव मतङ्गजः ॥ ४ ॥

हन्त ! कथमीदृशस्य हृदयमस्याशनिसङ्काशेनानेनोदन्तेन कलुषीकरोमि पापोऽहम् (सबाष्पं)—

कण्ठान्न निस्सरति हन्त ! कठोरवाणी
नेत्रात्परं पतति बाष्पझरी कवोष्णा ।
आज्ञा प्रभोर्बलवती किमिहाचरामि
हा पातितोऽस्मि विधिनाऽद्य तु सङ्कटेऽस्मिन् ॥ ५ ॥

(इत्युपसृत्य) जयतु (इत्यर्धोक्ते वस्त्रेण मुखमाच्छाद्य रुदंस्तिष्ठति)

**भीमः ॥** (सत्वरमवलोक्य) अये ! आर्ययुधिष्ठिरप्रियकञ्चुकी माण्डविकः ; भो माण्डविक ! किमिदममन्दानन्दतुन्दिलहृदयेषु परिजनेषु त्वमेको दुःखाकुलितोऽसि ? निवेदय मे दुःखकारणम् ॥

**कंचुकी ॥** (सगद्गदम्) कुमार ! कथं वा निवेदयामि, न मे निस्सरति वदनाद्वाणी ॥

**द्रौपदी ॥** [1] (सकरुणं) माण्डविअ ! अज्जउत्तस्स भणाहि, दुक्खं णिवारेदि एसो ॥

**कञ्चुकी ॥** कथमसौ निवारयति ? यन्न शक्नोति नियतेरपि निवारयितुम् ॥

**भीमः ॥** माण्डविक ! मैवं मंस्थाः, निवारयाम्यहं, निवेदय तावत् ।

**कञ्चुकी ॥** (उच्चैरुदन्) ।

देवनमक्षैर्भावन—
मतिदुर्गमकाननाय युष्माकम् ।
दास्ये वृत्तिस्ते तु
त्वद्भुजदर्पात्तवस्तुभोक्तारः ॥ ६ ॥

**भीमः ॥** (ससम्भ्रमम्) कथं कथं, विशदं निवेदय ; कैरस्माकमक्षदेवनं, केन कृतं ? किमर्थं वा अस्माकं वनवासः, दासभावो वा ? मद्भुजदर्पात्तवस्तुभोक्तारश्च के ? ॥

**कञ्चुकी ॥** (सगद्गदम्) शृणोतु कुमारः—

युधिष्ठिरस्समाहूतो धार्तराष्ट्रेण कैतवे ।
भवद्भिरार्जितं सर्वं प्रायच्छत्तेन निर्जितः ॥७॥

**भीमः ॥** (सविमर्शम्) माण्डविक ! किं युधिष्ठिरदुर्योधनावुभावेवाक्रीडताम् उतान्येऽपि ?

---

(छाया) [1] माण्डविक ! आर्यपुत्राय भण; दुःखं निवारयत्येषः ।

कञ्चुकी ॥ कुमार ! भवत्पक्षे महाराजयुधिष्ठिर एक एव, तस्य पक्षे तु पाशकप्रक्षेपणार्थं शकुनिर्नियुक्तः ॥

भीमः ॥ हन्त ! स तु वञ्चकः (विचिन्त्य) माण्डविक ! प्रथमं किं पणीकृतं देवेन ? ॥

कञ्चुकी ॥ शृणोतु कुमारः—आदौ कोशः ॥

भीमः ॥ हन्त ! प्रथममेव कोशः पणीकृतः ?

कञ्चुकी ॥ अथ किम् ॥

भीमः ॥ ततः ॥

कञ्चुकी ॥ तदनु करिणः ॥

भीमः । तेन तेऽप्यपहृता एव स्युः ?

कञ्चुकी ॥ अथ किम् ॥

भीमः ॥ ततः ॥

कञ्चुकी ॥ स्यन्दनाः ॥

भीमः ॥ (सशिरश्चालनं) भवतु नाम । ततस्ततः ॥

कञ्चुकी ॥ वाजिवृन्दम् ॥

भीमः ॥ तदप्यपहृतं स्यात् !

कञ्चुकी ॥ आम ॥

भीमः ॥ ततः ॥

कञ्चुकी ॥ पृथ्वी सर्वा जलधिरशना ॥

भीमः ॥ हन्त ! साऽप्यपहृता ?

कञ्चुकी ॥ अपहृतैव ॥

भीमः ॥ आः, कष्टम् । ततस्ततः ॥

कञ्चुकी ॥ छत्रसिंहासने च ॥

भीमः ॥ (सावेगं) किं ? ते अप्यपहृते ?

कञ्चुकी ॥ अथ किम् ॥

भीमः ॥ (दीर्घं निश्श्वस्य) माण्डविक ! अलमितःपरं न पारयामि श्रोतुम् ॥

द्रौपदी ॥ (सबाष्पं) [1]अह्महे ! छत्तसीहासणाइ वि किं दिण्णाइ अज्जउत्तेण । माण्डविअ ! कहं विअ अह्माणं रण्णगमणं कहेहि, तं वि सुणिअ देव्वदंसिदं मग्गं अणुगच्छह्म ॥

भीमः ॥ प्रिये ! किं श्रुतेन ॥

द्रौपदी ॥ (रुदन्ती) [2]अज्जउत्त ! तह ण हि । भणादु एसो ॥

भीमः ॥ माण्डविक ! तर्हि कथय । ततः ॥

कञ्चुकी ॥ (सगद्गदं) यूयं शूराः प्रथितयशसो दासभावे नियुक्ताः ॥

भीमः ॥ आः ! कथं वयं दासभावे नियुक्ताः ?

कञ्चुकी ॥ अथ किम् ॥

भीमः ॥ स्यान्नाम । ततस्ततः ॥

कञ्चुकी ॥ (सबाष्पं) साध्वी भार्या द्रुपददुहिता ॥

भीमः॥ (सावेगं) किं किं इयमपि दासीकृता ?

कञ्चुकी ॥ कृतैव ॥

द्रौपदी ॥ हा देव्वहदअ ! (इति मूर्छिता पतति)

भीमः ॥ प्रिये ! समाश्वसिहि समाश्वसिहि (इत्यंशुकेन वीजयति) ॥

द्रौपदी ॥ (लब्धसंज्ञा मन्दमुत्थाय सबाष्पं) [4]हद्धि मं मन्दभाइणिं । पुढमं एव्व सो दुज्जोहणहदओ मइ दिण्णदिट्ठी दाणिं किं करेदित्ति ण जाणामि ॥

---

(छाया) [1] अहो ! छत्रसिंहासने अपि किं दत्ते आर्यपुत्रेण । माण्डविक ! कथमिवास्माकमरण्यगमनं कथय, तदपि श्रुत्वा दैवदर्शितं मार्गमनुगच्छामः ।

[2] (छाया) आर्यपुत्र ! तथा नहि । भणत्वेषः ।

(छाया) [3] हा दैवहतक ! ॥

(छाया) [4] हा धिङ्मां मन्दभागिनीं; प्रथममेव स दुर्योधनहतको मयि दत्तदृष्टिरिदानीं किं करोतीति न जाने ।

भीमः ॥ माण्डविक ! किमवशिष्टं वर्तते ?

कञ्चुकी ॥ शृणोतु कुमारः—हन्त हन्त स्वमेव ॥

भीमः ॥ (सवैलक्ष्यं) किमात्मानमपि दास्ये नियुक्तवानार्यः ?

कञ्चुकी ॥ अथ किम् ॥

भीमः ॥ माण्डविक ! कथं कथं क्रमो ग्लहस्य ?

आदौ कोशस्तदनु करिणस्स्यन्दना वाजिवृन्दं
पृथ्वी सर्वा जलधिरशना च्छत्रसिंहासने च ।

ततस्ततः—

कञ्चुकी ॥ यूयं शूराः प्रथितयशसो दासभावे नियुक्ता-
स्साध्वी भार्या द्रुपददुहिता हन्त हन्त स्वमेव ॥८॥

भीमः ॥ (सक्रोधं गदाशिखरं भूमौ सवेगं निधाय श्मश्रुकलाप-मङ्गुलिमुखेन परामृशन्) आः पाप ! दुर्योधनहतक ! विस्मृता ः भवता मद्गदा ?

निर्भिद्य वक्षो गदयाऽद्य पाप !
निरर्गळोद्गच्छदसृक्छटाभिः ।
गदाम्मदीयां परितर्पयामि
समर्पयाम्यार्यवशे धरित्रीम् ॥ ९ ॥

(इति साटोपमुत्तिष्ठति)

कञ्चुकी ॥ कुमार ! अलमलममर्षेण । तेन दुर्योधनहतकेनैको नियमः कृतः ॥

भीमः ॥ (उद्धतं परिक्रम्य) किं नियमोऽपि कृतः ? को वा नियमः ?

कञ्चुकी ॥ युष्मासु पञ्चसु दास्यकाले, यः कोऽपि प्रकुपितः प्रतीपो यदि भवेत्तदा हायनमेकं सर्वेषामपि वनवासो निर्धारितः ॥

**भीमः** ॥ (सौदासीन्यं) किमियानेव नियमः ? भवतु नाम ॥

**कञ्चुकी** ॥ कुमार ! नैतावानेव अन्योऽपि वर्तते । एकहायनाभ्यन्तरे संपाद्यास्मद्देशाद्बहिः क्वापि द्रविणभारं तेन कोशागारं पूरणीयं ; नोचेत्पुनरपि दास्यमेव—इति च ॥

**भीमः** ॥ (दीर्घं निश्श्वस्य) आः; सर्वथा निगडितोऽस्मि दैवेन ॥

उत्खाताशीः फणिपतिरिव प्रोञ्छितोच्चण्डदंष्ट्रः
पञ्चास्यो वा करिवर इव प्राप्तवारीकुगर्तः ।
निश्श्रीकोऽद्य प्रथितबलवानप्यहो ! भीमसेनो
दुर्दैवेन प्रमुषितबलो योजितो दास्यकृत्ये ॥१०॥

(इति गदां करात्क्षितितले च्यावयति)

**द्रौपदी** ॥ (सबाष्पं) [1] हा णाह ! जसजोण्हाधवलिअदिसाअक्को सुउमारकराहिणंदिअसअळराअउळो, जहिट्ठिलचन्दो, अज्ज दुज्जोहणराहुगहीदो । इदोवरं अह्माणं कहंवा रज्जसोक्खं हविस्सइ ?

(प्रविश्य चेटी)

**चेटी** ॥ [2] भट्टिणि ! (इत्यर्धोक्ते सिचयाञ्चलेन मुखमाच्छाद्य रुदन्ती तिष्ठति)

**द्रौपदी** ॥ [3] हञ्जे ! वासन्तिए ! कहेहि, कहेहि सुणिदव्वं सुदं मए । किं पिहिदेण ! इदोवरं मन्दभाइणिं मं भट्टिणित्ति मा भणाहि । दासी कहं विअ भट्टिणी हविस्सइ । (इति रोदिति)

**चेटी** ॥ (सगद्गदं) [4] भट्टिणि ! महाराअदुज्जोहणो आणवेदि, "इदोवरं तुमं मह दासी संउत्ता । ता दाणिं एव्व एहि"त्ति ॥

---

(छाया) [1] हा नाथ ! यशोज्योत्स्नाधवलितदिक्चक्रस्सुकुमारकराभिनन्दितसकलराजकुलो युधिष्ठिरचन्द्रोऽद्य दुर्योधनराहुगृहीतः । इतः परमस्माकं कथंवा राज्यसौख्यं भविष्यति ।

[2] भट्टिनि !

[3] हञ्जे वासन्तिके ! कथय कथय श्रोतव्यं श्रुतं मया, किं पिहितेनेतःपरं मन्दभागिनीं मां भट्टिनीति मा भण, दासी कथमिव भट्टिनी भविष्यति ।

[4] भट्टिनि ! महाराजदुर्योधन आज्ञापयति "इतःपरं त्वं मम दासी संवृत्ता, तदिदानीमेव एहि" इति ।

द्रौपदी ॥ [1] (सबाष्पं भीमसेनचरणयोर्निपत्य सदैन्यं) अज्जउत्त ! णाह ! ससिउळतिळअ ! पवणतणअ ! अवळा अणाहा हं इदोवरं तुए एव्व रक्खणिज्जा ॥

भीमः ॥ (सामर्षं सकम्पञ्च) आः कष्टं भोः कष्टं । प्रिये ! नूनमनाथाऽसि ; नूनं नूनं ; धिगस्मान्पञ्च वल्लभान् । किं करोम्यद्य (इति हस्तेन हस्तं निष्पीड्य सशीर्षान्दोळनं) हुं ; भवतु तावत्—

युधिष्ठिरमहावचोनिगडगाढसंयन्त्रिता
भवन्तु स इवानुजा मम तु तस्य दासास्सदा ।
अहं पुनरमोघया द्रुसृणवच्च निष्पिष्य तं
सुयोधनमिहानया विवशयामि विश्वम्भराम् ॥११॥

(इति साटोपं गदामादायोद्धत परिक्रामति)

द्रौपदी ॥ [2](सबाष्पं) अज्जउत्त ! कहं विअ अज्ज दुज्जोहणहदअस्स सआसे दासीहविअ वट्टेमि । णाहं पारेमि । ता परित्ताअदु अज्जउत्तो ॥

कञ्चुकी ॥ (सदैन्यं) कुमार ! कोपं मा कृथाः वने द्रविणार्जनमप्यापतिष्यति ॥

भीमः ॥ (दीर्घं निश्श्वस्य) प्रिये ! नाहमिदानीं परित्राणदक्षः ; वागुरासंयतः केसरीव संवृत्तोऽस्मि ॥

(पटाक्षेपेण प्रविश्य सहदेवस्सदैन्यम् )

सहदेवः ॥ आर्य ! विलम्बासहिष्णुर्महाराजदुर्योधनस्समाज्ञापयति सञ्चरमिदानीमेव समागन्तव्यमिति । तदागच्छत्वार्यः ॥

---

(छाया) [1] आर्यपुत्र ! नाथ ! शशिकुलतिलक ! पवनतनय ! अबलाऽनाथाऽहमितः परं त्वयैव रक्षणीया ।

[2] आर्यपुत्र ! कथमिवाद्य दुर्योधनहतकस्य सकाशे दासीभूत्वा वर्ते ? नाहं पारयामि । तत्परित्रायतामार्यपुत्रः ।

भीमः ॥ (सामर्षं परिघूर्णिततारकः) अरे ! मूर्ख ! किं किमुक्तं ? महाराजदुर्योधन इति ? को वा महाराजः ; कं वाऽऽज्ञापयति ? स तु नियोजकः ; त्वं तु नियोज्यः किं ? (सशीर्षान्दोलनमङ्गुळिमुखेन श्मश्रुकलापं परामृश्योर्ध्वमवलोक्य च) अरे ! पुरुषापसद ! कुरुकुलाधम ! दुर्योधनहतक ! —

चूर्णयाम्याशु पापं त्वां पादाघातेन सम्प्रति ।
किं किमुक्तं पुनर्ब्रूहि नामशेषं करोम्यहम् ॥१२॥

(इति गदां परिभ्रामयन् साटोपं परिक्रामति)

सहदेवः ॥ (प्रणम्य साञ्जलिबन्धं) आर्य ! आर्ययुधिष्ठिरो भवन्तमब्रवीत् । शान्तात्मना भवता भवितव्यमिति ॥

भीमः ॥ आः ! सर्वथा मद्वेगस्य सेतुवदयमार्यः । हुं ! भवतु नाम । मार्गमादेशय ॥

कञ्चुकी ॥ इतइतः कुमारः ॥

(भीमः—दीर्घं निश्श्वसन्परिक्रामति)

चेटी ॥ [1] इदो इदो भट्टिणी ॥

(द्रौपदी—सबाष्पमवनमितमुखी भीममनुसरति)

(ततः प्रविशत्यवनमितमुखैर्युधिष्ठिरा–र्जुन–नकुलैः परिवृतो दुश्शासन–शकुनि–कर्णैश्चासने समुपविष्टैस्सह दुर्योधनः)

दुर्योधनः ॥ (सस्मितं मस्तकमान्दोलयन् श्मश्रुपल्लवमङ्गुळिमुखेन परामृश्य) राजाधिराज ! महाराजयुधिष्ठिर !

शकुनिकर्णविकर्णणपण्डित-
स्सुहृदि दर्शितबाहुपराक्रमः ।
मदनुजे रचितात्यवमाननः
क्वनु ममानुचरोऽद्य वृकोदरः ? ॥१३॥

(छाया) [1] इतइतो भट्टिनी ।

भीमः ॥ (दूरादेव दुर्योधनवचनमवकर्ण्य सामर्षं) आः ! दुरात्मन् ! किमुक्तं त्वया ? "क्वनु ममानुचरोऽद्य वृकोदरः" इति । आयातोऽहं ; [1] तवानुचरणार्थमेव । (इति गदामुद्यम्य साटोपं सत्वरमागन्तुमुद्युङ्क्ते)

सहदेवः ॥ (सहसा भीमपाणिमवलम्ब्य) आर्य ! नायमवसरोऽमर्षस्य । तच्छान्तो गच्छतु भवान् । किमु विस्मृतमार्ययुधिष्ठिरवचनम् ? "शान्तात्मना भवता भवितव्यं"इति ॥

भीमः ॥ (बलादमर्षमुपसंहृत्य पाणिना पाणिं निष्पिष्य) आः ! सर्वथा निगडितोऽस्म्यार्यवचनेन (इत्युपसर्पति)

युधिष्ठिरः ॥ (भीममवलोक्य स्वगतं) हन्त ! कदा वा क्रुधा दुर्योधनमभिपतति वत्स इति न जाने (सबाष्पं) धिङ्माम् । कथमद्य पापोऽहं वत्सं पश्यामि ? अयन्तु वत्सः—

निजबलेन तृणीकृतवासवो
भुजवशीकृतसर्वमहीश्वरः ।
मम वचोदृढशृङ्खलिकावृतः
कथमिवास्य भवेत्परिचारकः ? ॥१४॥

(द्रौपदीमवलोक्य सानुतापं) हन्त ! इयम्—

शोकार्ता विनमितवक्त्रपूर्णचन्द्रा
पाणिभ्यां नयनयुगं पिधाय साश्रु ।
आयान्ती मम हृदयं विलाप्य कान्ता
दुःखाब्धिं नयति नदीव नीरमन्यत् ॥१५॥

भीमः ॥ (उपसृत्य) आर्य ! भीमः प्रणमति (इति युधिष्ठिरं प्रणमति)

---

[1] तव भक्षणार्थमेवेत्यर्थः ।

युधिष्ठिरः ॥ (सबाष्पं सगद्गदं च)—

व्यसनैकरताय गर्हिताय
प्रबलाघार्जनतत्पराय वत्स ! ।
श्रितदुःखकृते वृकोदराय
प्रणतिं मा कुरु दुर्गताय मह्यम् ॥१६॥

भीमः ॥ भीमोऽहमागतोऽस्मि । आज्ञापयत्वार्यः ।

युधिष्ठिरः ॥ (सगद्गदं) वत्स ! न मेऽद्य दासस्याज्ञाशक्तिः ; तन्महाराजदुर्योधनस्समाज्ञापयति ।

भीमः ॥ (स्वगतं) हन्त ! अस्य धार्तराष्ट्रापसदस्याज्ञानुवर्तनमपि विधिना मदीये ललाटे विलिखितम् (कृच्छ्राद्दुर्योधनस्याभिमुखीभूय—प्रकाशं) भीमोऽहमागतोऽस्मि । समाज्ञापयतु महाराजदुर्योधनः ॥

दुर्योधनः ॥ (सस्मितं) मद्वचनाद्द्रौपदीमित आह्वय ॥

युधिष्ठिरः ॥ (स्वगतं) हन्त ! किमयमिदानीमाचरतीति न जाने ॥

अर्जुनः ॥ (सबाष्पं स्वगतं)—

यस्यै नभस्स्थलनिबद्धमनन्यभेद्यं
क्षित्यर्पिते मकरयन्त्रमृजीषतैले ।
पश्यन् न्यपातयमहं विशिखेन कष्टां
सैवेदृशीमनुभवत्यधुना दशां हा ॥१७॥

भीमः ॥ (सबाष्पं सगद्गदं) प्रिये ! यज्ञवेदीसम्भवे ! सत्वरमायाहि, महाराजदुर्यो—(इत्यर्धोक्ते मूर्छितः पतति)

(ततः प्रविशति विदुरपाणिमवलंब्य धृतराष्ट्रः)

धृतराष्ट्रः ॥ वत्स ! विदुर ! वत्सेन सुयोधनेनानुचितमाचरितं कर्म ; हन्त !—

तान्कैतवे मम सुतोऽनुजपाण्डुपुत्रा-
न्निर्जित्य सर्वमपहृत्य च दास्यकृत्ये ।
श्रुत्वा न्ययूयुजदिति प्रबलेऽद्य शोक-
सिन्धौ निमग्नमचिराद्धृदयं मदीयम् ॥१८॥

तदद्य तान् दासभावान्मोचयामस्तावत् । तन्नय मां तं देशं ; यत्र मे वत्सो वर्तते ॥

**विदुरः** ॥ मन्दमागच्छत्वार्यः—(इति परिक्रामति) (सर्वेऽभ्युत्तिष्ठन्ति)

**धृतराष्ट्रः** ॥ (निपतिते भीमे पदस्खलनमभिनीय सरभसमुपविश्य) कोऽयं ? कोऽयं ? (इति पाणिभ्यां परामृशति)

**विदुरः** ॥ (सबाष्पं संगद्गदं च) आर्य ! भीमसेनोऽयं मूर्छितः क्षितितले शेते ॥

**धृतराष्ट्रः** ॥ (स्वगतं) किमु भीमोऽयं ? (सहर्षं) बलावलिप्तोऽनुभवतु नाम (प्रकाशं—कृतकदुःखमभिनीय) कथं ! कथं ! भीमसेनोऽयम् । हा वत्स !

मृदुलोपधानशयनोचितां तनुं
कथमङ्ग ! रूक्षधरणीतलेऽकरोः ।
कृतराजसूयसवनस्य तेऽधुना
कुत ईदृशी च महती विसंज्ञता ? ॥१९॥

(इति वस्त्राञ्चलेन वीजयति)

**भीमः** ॥ (मन्दं लब्धसंज्ञ उत्थाय धृतराष्ट्रमवलोक्य ससम्भ्रमम्) आर्य ! भीमोऽहमभिवादये ।

**दुर्योधनः** ॥ (स्वगतं) हन्त ! अस्मत्कार्यस्य मूर्तः प्रत्यूहस्संप्राप्तः ।

(सर्वेऽभ्युपसृत्य धृतराष्ट्रं प्रणमन्ति)

**धृतराष्ट्रः** ॥ वत्स ! भीम ! क्वेदानीं वत्सो धर्मपुत्रः ? स्पर्शय तं मत्पाणिना ॥

**भीमः** ॥ अयमार्यः (इति युधिष्ठिरं धृतराष्ट्रपाणिना स्पर्शयति)

**धृतराष्ट्रः** ॥ वत्स ! धन्योऽसि निर्वर्तितराजसूयाध्वरतया। महती भवता समार्जिता कीर्तिः । (इति पाणिना युधिष्ठिरं परामृशति)

**युधिष्ठिरः** ॥ (सगद्गदं)—

यत्कृते सोदराः कष्टां
दशामनुभवन्त्यमी ।
याज्ञसेन्यपि दुःखार्ता
तं मां मा स्पृश पापिनम् ॥२०॥

(इत्यवनमितमुखस्तिष्ठति)

**विदुरः** ॥ (स्वगतं)—

व्यसनं वदन्ति विबुधास्तु कैतवं
मृगयां यदासवनिषेवणं तथा ।
अखिलं कदाऽपि तदतं भवेद्ध्रुवं
तदिहाद्य हन्त ! फलितं मयेक्षितम् ॥२१॥

(सनिश्श्वासं) भवतु नाम । को वा शक्नोति भवितव्यतां निवारयितुं ; अयं पुनः मूर्खो दुरात्मा दुर्योधनः ॥

अस्मिन्सुयोधने प्रोक्तो ह्युपदेशो निरर्थकः ।
जगद्धितैषिणा क्रूरसर्पेऽर्पितपयो यथा ॥२२॥

**धृतराष्ट्रः** ॥ (ससंभ्रमं) कथं कथं, याज्ञसेन्यपि दुःखार्ता ? (इति सनिश्श्वासमासनं पाणिनाऽन्विष्य समुपविश्य) क्वेदानीं सा साध्वीशिरोमणि-र्याज्ञसेनी ? ॥

**द्रौपदी** ॥ (मन्दमुपसृत्य सगद्गदम्), अज्ज वंदामि । (इति प्रणमति)।

**धृतराष्ट्रः** ॥ सशोकं सगद्गदश्च भाषमाणेयं का वा प्रणमति ? ॥

**युधिष्ठिरः** ॥ इयमेव याज्ञसेनी ॥

---

(छाया) आर्य ! वन्दे ।

धृतराष्ट्रः ॥—

लक्ष्मीरिवासि सदनस्य ममायि ! वत्से !
दुःखं कुतो वद ? तवाद्य निवारयामि ।
को वा सतीमणिमिमां भवतीं निपात्य
शोकाम्बुधौ सुखमुपैति निवेदयेह ? ॥२३॥

द्रौपदी ॥ (सबाष्पं) [1] अज्ज ! हं वि अबला दासीकिदह्मि !

धृतराष्ट्रः ॥ वत्स ! सुयोधन ! सुयोधन ! ॥

दुर्योधनः ॥ (स्वगतं) हन्त ! इदानीं त्वहमुपदेश्यस्संवृत्तः ? (उपसृत्य प्रकाशं) आगतोऽस्म्याज्ञापयन्तु तातपादाः ? ॥

धृतराष्ट्रः ॥ क्वासि ? वत्स ! सकाशमायाहि (इति दुर्योधनपाणिमवलंब्य) वत्स ! कथयामि ते कुशलिनीमेकां वार्ताम् । अपिनाम शृणोषि ?

दुर्योधनः ॥ यदि कुशलिनी श्रोतुमहमपि सिद्धोऽस्मि ॥

धृतराष्ट्रः ॥ वत्स ! तर्हि, कदाऽप्यकुशलं ते किमु भावयेयम् ? ॥

दुर्योधनः ॥ तर्हि ! कथयन्तु भवन्तः (इत्युपविशति) ।

धृतराष्ट्रः ॥ (स्वगतं) अपिनाम वत्सोऽयं ज्ञास्यति मदाशयम् ? भवतु, जानात्येव धीमानयम् । किमनया विचिकित्सया ? तदेनमादिशामि । (प्रकाशं) वत्स ! विमोचय दास्यादेतान्पाण्डुपुत्रान् । साध्वीमेनां याज्ञसेनीञ्च । अनुभवन्त्वेतेऽपि राज्यसौख्यम् ॥

दुर्योधनः ॥ (उच्चैर्विहस्य) इयमेव वा कुशलिनी वार्ता ? । स्यान्नाम विमोचयामः ! यद्यनुमन्येत नीतिज्ञो धर्मराजः ॥

युधिष्ठिरः ॥ महाराज !

धर्मच्युतेरिदं श्रेयो दास्यमस्माकमस्तु तत् ।
न त्यजामि प्रतिज्ञां तां न बिभेमि च दास्यतः ॥२४॥

---

(छाया) [1] आर्य ! अहमप्यबला दासीकृताऽस्मि ।

भीमः ॥ (स्वगतं) किमयमनवरतमपि "धर्मो धर्मः" इति धर्मपाशनिगडितो दुःखसमुद्रे निमग्नस्स्वयम्, अस्मानपि मज्जयति ॥

धृतराष्ट्रः ॥ (सहर्षं स्वगतं) तात! धर्मपुत्र! पुनरप्येवं कथय। (सानन्दं) भवतु नाम; दृढीकरोम्येतदेव। (प्रकाशं) वत्स! युधिष्ठिर! कथय तावत् प्रच्युतप्रतिज्ञोऽस्मीति ततस्स्वयमेव निर्मोचयति दास्यादायुष्मान् ॥

(युधिष्ठिरः—धर्मच्युतेरिति पूर्वोक्तमेव पठति)

भीमः ॥ तर्हि किमु निरवधिकमस्माकं दास्यं, आहोस्वित्सावधिकम्?

विदुरः ॥ अवधिरवश्यं कर्तव्यः; नोचेत्को वा यावज्जीवं दास्यमाचरेत्? ॥

दुर्योधनः ॥ (सक्रोधं) किमुक्तं? "को वा यावज्जीवं दास्यमाचरेत्" इति? यः पराजितो द्यूते स एव समाचरति; किमप्रसक्तयाऽनया चर्चया; पूज्यानामनुचिताऽत्र वाक्प्रवृत्तिः; तूष्णीं तिष्ठन्तु भवन्तः ॥

धृतराष्ट्रः ॥ वत्स! अलं कोपेन। चिन्तयतु भावानेव धर्मम्। अनुचितं हि तेषां यावज्जीवं दास्यम्। तदवधिमादिशतु ॥

दुर्योधनः ॥ (स्वगतं) नायमवसरश्शाठ्यस्य; तदेवमादिशामि; (प्रकाशं) तर्हि; पञ्चहायनावधिकमेतेषां दास्यं; तन्मध्ये यदि भवेद्यः कोऽपि प्रकुपितः प्रतीपः, तदा तु—एकहायनमज्ञातवासः, ततश्च वनवासः, तत्र च नियमः पूर्ववत्—इति निर्धारितः। अत्र न कस्याप्युपदेशार्थमर्गळीभूतस्य वचनं वयं श्रोष्यामः—(इति साटोपमुत्थाय) कस्कोऽत्र भोः! ॥

(प्रविश्य कञ्चुकी)

कञ्चुकी ॥ अयमहमस्मि ॥

दुर्योधनः ॥ प्रापय द्रौपदीमेनामवरोधम्। भो भीम! त्वं तावदस्मच्छयनागारद्वारपालो भव। (इति साटोपं परिक्रम्य दुश्शासन-कर्ण-शकुनिभिस्सह निष्क्रान्तः)

कञ्चुकी ॥ (दीर्घं निश्श्वस्य) अम्ब ! द्रौपदि ! समायाहि महाराजदुर्योधनान्तःपुरम् ॥

(द्रौपदी सबाष्पं भीमं पश्यन्ती मन्दं कञ्चुकिना सह निष्क्रान्ता)

धृतराष्ट्रः ॥ वत्स ! विदुर ! कथं गत एव सुयोधनः ? ॥

विदुरः ॥ अथ किम् ? ॥

धृतराष्ट्रः ॥ क याज्ञसेनी ?

विदुरः ॥ सुयोधनावरोधं प्रवेशिता ॥

धृतराष्ट्रः ॥ कथं साऽपि गतैव ? (स्वगतं) हन्त ! मूर्खस्सुयोधनः सतीमणिं तां कदाऽपि स्पृशेत् । तदनर्थाय । तदिदानीमेव प्रबोधयामि तम् । (प्रकाशं) कथमसद्वार्ताऽप्यतिक्रान्ता तेन शठेन ? भवतु ; पुनरपि कथयामि ; (इत्युत्थाय) वत्स ! विदुर ! मार्गमादेशय ; (इति विदुरपाणिमवलंब्य निष्क्रान्तः)

सत्वरं प्रविश्य दुश्शासनः ॥ महाराजदुर्योधनस्समाज्ञापयति– "युधिष्ठिरो धृतराष्ट्रपरिचर्यानिरतो भवतु । अर्जुनः कर्णानुचरः । नकुलश्शकुनिमनुसरतु । सहदेवोऽवरोधद्वारपालस्तिष्ठतु"–इति । तन्महाराजनियोगमशून्यं कुर्वन्तु भवन्तः ॥

युधिष्ठिरार्जुन-नकुल-सहदेवाः ॥ बद्धपरिकरास्सिद्धास्स्मः ।

(इत्यवनमितमुखा दुश्शासनेन सह निष्क्रान्ताः)

भीमः ॥ (अंसे समारोप्य गदां दीर्घं निश्श्वस्य) अहो ! विधिविलसितम् ! —

जन्ये विजितराजन्यो विधिनाऽद्य वृकोदरः ।
दुर्योधनगृहद्वारपालकत्वे नियोजितः ॥१९॥

(इति निष्क्रान्तः)

इति श्रीयदुशैलवासि-बालधन्वि-जग्गू-वकुलभूषणकवि-
विरचिते अद्भुतांशुकनाटके तृतीयोऽङ्कः ॥

॥ श्रीः ॥

# चतुर्थोऽङ्कः ॥



(ततः प्रविशत्यंसतले समारोप्य गदां तत इतः
पर्यटन् द्वारपालो भीमः)

भीमः ॥ (दीर्घं निश्श्वस्य क्षणमिव निश्चलं स्थित्वोर्ध्वमवलोक्य च) हन्त ! विधिविलसितम् ॥

सौधद्वारे महति सुचिरं यस्य सन्दर्शनार्थं
भीताः प्रापुर्धरणिपतयस्सौविदल्लत्वमत्र ।
सोऽयं भीमः पवनतनयो हन्त ! दुर्योधनस्य
द्वारे शय्याभवनमभितस्स्थापितोऽस्म्यद्य कष्टम् ॥१॥

(विचिन्त्य) स्यान्नामैतत् ॥

तदा भर्तृत्यक्ता परपुरुषसेवासु नाटिता
प्रिया दीर्घापाङ्गा निजगणविमुक्तेव हरिणी ।
अपश्यद्दृष्ट्वा मां यदिति सभयं साश्रु च मुहु-
स्सदैन्यं तन्मे हा हृदयमनिशं हन्त ! तुदति ॥२॥

हन्त ! वज्रसारनिर्मितमिव दृश्यते हृदयमार्यस्य

वीक्ष्य दुःखजलधौ निनिमग्नां
तां शिलाऽपि भवति स्म विलीना ।
आर्यचित्तमतिदारुणसारं
नो विलीनमत एव कथञ्चित् ॥३॥

कष्टम्, धर्मपिशाचाक्रान्ततया जडस्य तस्य साहचर्यादस्माकमपि वज्रसारीकृतं हृदयं । हुं ! अथवा किं तदुपालम्भेन, एवं स्थिते दैवदुर्विपाके । (विचिन्त्य) नास्माभिः कृतो राजसूयाध्वरः, किन्तु राजासूयाध्वरः । अत

एवापतितैताद्दृश्यनर्थपरम्परा । भवतु नाम भवितव्यता । न किञ्चिदपि नाञ्जल्यमावहति मे हृदयं (परितो विलोक्य) हन्त ! प्राप्तनिशीथतया गाढ-निद्रालिङ्गिता आदिवसं विरचितकार्यकलापतया विस्मृत्यात्मदेहमपि तत्र-तत्र स्वपन्ति परिजनाः—

स्तम्भोच्चमूलमसृणोपलदत्तशीर्षा
　नासाऽऽस्यगह्वरगलद्धुरुघोररावाः ।
लालाजलाङ्कितकपोलतला निषण्णा
　उष्णीषगूढवदना भुवि शेरते हि ॥४॥

(वातायनेन गगनमवलोक्य) हन्त ! चन्द्रोऽभ्युदित एव—तथाहि—

नभसि विभात्यसितेऽस्मिन्
　शरदिन्दुर्धवलमेघपिहिताङ्गः ।
मरकतसंपुटनिहित-
　स्सितलवतूलावृतोऽच्छहीर इव ॥५॥

ममापि तावत्परिकर्षति पक्ष्मणी निद्रा । तन्निषण्ण एव क्षणमिव निद्रासुखमनुभवामि । (इति वीरासनोपविष्टो गदामवलम्ब्य पाणिना अपर करतलशायितचुबुको द्वारि निद्रां नाटयति)

(नेपथ्ये नूपुरनादः)

**भीमः** ॥ (मन्दमुन्मृज्य पाणिभ्यां नयनयुगळमुन्मील्य) अये ! कोऽयं निशीथे नूपुरनादः ? (इति नेपथ्याभिमुखमवलोक्य सविमर्शम्) विरळदीपतया नातिस्फुटाङ्गलावण्या—

नीवीकलापमवनौ परिलम्बमान-
　मुद्धृत्य किञ्चिदिव वामकराम्बुजेन ।
आयाति मस्तकनिचोळितनीलचेल-
　प्रान्तं परेण परिगृह्य च काचिदेषा ? ॥६॥

अपिनाम द्रौपदी ? ॥

(ततः प्रविशति यथानिर्दिष्टा द्रौपदी)

**द्रौपदी** ॥ (सबाष्पं समान्त्रसं च परितो विलोक्य) [1] अह्महे ! जहुट्ठिलेण दूरीकिदह्मि । अज्जुणो वि ण मं पेक्खदि । णउळ–सहदेव्वा वि जेट्ठभादुणो वअणणिव्वहणे दिण्णमाणसा । ता केण वा अण्णेण कहइस्सं पवणतणअं विणा । होदु तं एव्व पेक्खिस्सं । जइ सोवि कुप्पेदि तदा विसं वा गेण्हिअ उज्झिअप्पाणा हविस्सं (इति परिक्रम्य भीममवलोक्य) अह्महे ! सूरो वि एद्ध दुज्जोहणहदअस्स दुवारे अणिद्दो चिट्ठइ । ता उवसप्पेमि । (इत्युपसृत्य सदैन्यं प्रणमति) ॥

**भीमः** ॥ (निर्वर्ण्य) कथं द्रौपदी ! प्रिये ! किमिदं निशीथे त्वमेकाकिनीह समागताऽसि ? नेदमुचितं दास्यास्ते, तद्गच्छ, यःकोऽपि प्रबुद्धः पश्येत् ॥

**द्रौपदी** ॥ (संस्कृतमाश्रित्य सबाष्पं) नाथ ! पाहि मां । न पारयामि दुर्योधनहतकहिंसां सोढुम् ॥

**भीमः** ॥ (सावेगं) किं दुर्योधनस्त्वां पीडयति ? ॥

**द्रौपदी** ॥ (सबाष्पं) नाथ ! भानुमत्या दत्तं ''शय्यागारे निधेहि''इति स्रक्चन्दनाद्युपभोगसामग्रीपरिपूर्णं भाजनमादाय मयि गतवत्यां, पापस्स-दुर्योधनहतकः (इत्यर्धोक्ते अवनमितवदना रुदती तिष्ठति)

**भीमः** ॥ ततः किं ? कथय कथय । तेन किं कृतं ? अपिनाभ स्पृष्टाऽसि ? ॥

**द्रौपदी** ॥ (सगद्गदं) नाथ ! नहि नहि । ''ननु ! सुतनु ! कलभाषिणि ! चन्द्रानने ! —

---

(छाया) [1] अहो ! युधिष्ठिरेण दूरीकृताऽस्मि । अर्जुनोऽपि न मां पश्यति । नकुलसहदेवावपि ज्येष्ठभ्रातुर्वचननिर्वहणे दत्तमानसौ । तत्केनान्येन कथयिष्यामि पवनतनयं विना । भवतु तमेव द्रक्ष्यामि । यदि सोऽपि कुप्यति ततो विषं वा गृहीत्वोज्झितप्राणा भविष्यामि । अहो ! शूरोऽप्यत्र दुर्योधनहतकस्य द्वारे अनिद्रस्तिष्ठति । तदुपसर्पामि ।

पराजिताः पाण्डुसुताः प्रियास्ते
दासीकृता स्तेषु कुतोऽनुरागः ।
ममेश्वरस्यायि ! विशालमङ्क-
मलङ्कुरुष्वाद्य तवासि दासः" ॥७॥

इति निगदन्मन्मार्गस्यार्गळीभूय स्प्रष्टुमुद्यतोऽभवत् ।

**भीमः** ॥ (सक्रोधं) आः, अपिनाम स्पृहयति नृशंसो भवत्यै ? । प्रिये याज्ञसेनि! —

मागास्त्वमद्य तस्याङ्क
मादीया यातिवयं गदा ।
मत्पाणिलालिता स्वर्ग-
सुखदा भवतीव या ॥८॥

(सशीर्षान्दोलनं) हुं ! अथवा—

स्वपिति क्व ! युधिष्ठिरः प्रभुर्नो
विनिपात्यातिनिहीनदास्यकृत्ये ।
ननु ! गच्छ निवेदयाद्य तस्मै
तव दुःखं स निवारयिष्यति द्राक् ॥९॥

**द्रौपदी** ॥ (सदैन्यमञ्जलिं बध्वा) नाथ ! अलममर्षेण । त्वयि प्रकुपिते को वाऽन्यो मां रक्षिष्यति ॥

**भीमः** ॥ (हस्तेन हस्तं निष्पिष्य स्वगतं) आः ! किं करोमि । हन्त ! अद्यामर्षकार्यं कर्तुमपि त्यक्तुमप्यनीशोऽस्मि । हन्त ! उभयतः पाशः । किमेतत्सर्वमप्यार्ययुधिष्ठिरहृदयं नाधिरोहति ? भवतु नाम । (प्रकाशं) ततः किं कृतं तेन दुरात्मना ?

**द्रौपदी** ॥ तत्रान्तरे गान्धारी तत्रागत्य प्राहिणोन्मां निज-स्थानमेव ॥

**भीमः** ॥ स्यादेतत् । ततःपरमेतावन्तं कालं तस्मान्न काऽपि किमु भीतिः ? ॥

**द्रौपदी** ॥ नाथ ! महती भीतिस्समुत्पन्ना । तत एव नाथं त्वां शरणं भजामि ॥

**भीमः** ॥ कथय किं तत् ?

**द्रौपदी** ॥ नाथ ! दुर्योधनहतकलब्धप्रसादा काचिच्चेटी मत्सकाशमासाद्याब्रवीत् । "महाराजदुर्योधनस्त्वामाज्ञापयति "श्वः पुन रुषस्येव धृतमङ्गळवेषया मन्दारोद्यानं गत्वा मन्दारकुसुमान्यपचित्य तैरेव गुम्भितां हृदयङ्गमां स्रजं कनकभाजने निधाय तत्रैव भक्त्या भवितव्यम् । अहं पुनरनुपदमेव तत्र मन्दिरे विराजमानस्य चक्रपाणेस्सपर्यायै समागमिष्यामि" इति । तदुषस्येव त्वया मन्दारोद्यानं गन्तव्यं" इति । तन्मया मन्दारोद्यानं गन्तव्यं संवृत्तम् । तत्र च स नृशंसः किं वा करिष्यतीति न जाने । तत्पाहि माम् । (इति रुदती चरणयोः पतति) ॥

**भीमः** ॥ (सामर्षमरुणतरं नयनयुगळं परिभ्रामयन्) आः ! पाप नरापसद ! पश्येदानीं न भवसि । (इति सवेगं शय्याभवनद्वारार्गळे पाणिं निक्षिपति) ॥

**द्रौपदी** ॥ (ससम्भ्रमं) मा कवाटमुद्धाटय । अत्याहितमापतेत् । (इति भीमपाणिं गृह्णाति) ॥

**भीमः** ॥ (सक्रोधं) प्रिये ! मुञ्च पाणिं । मा निवारय । पर्यङ्के शयान मद्य मत्कुणवन्निष्पिष्य वामचरणाङ्गुष्ठेन निष्ठुरहृदयं नामशेषं करोमि । किं न जानासि मां जगत्प्राणप्राणपुत्रं ? शृणु तावत्—

विदार्य गदयाऽनया परवधूजनाकांक्षिणं
　　सुयोधनमिहाधमाधममहं धराया धुरम् ।
भरामि भुजपीठयोः कमठवद्धठान्निष्ठुरं
　　युधिष्ठिरमनः परेत्वनुसरन्तु तत्सोदराः ॥१०॥

(इति झडित्यर्गळं पाणिनोत्पाट्य गृह्णाति)

द्रौपदी ॥ (अञ्जलिं बद्ध्वा) नाथ ! अलममर्षेण । नायमवसरः कोपस्य । प्रदर्श्य तावद्दोषं तस्मिंस्ततः प्रतीपगमनं समुचितमिति प्रतिभाति मे ।

भीमः ॥ तर्हि किं कुर्मः ? ॥

द्रौपदी ॥ अहं तावदुपस्थैव गमिष्यामि मन्दारोद्यानं तदा वृक्षान्तर्हितेन तत्र भवता भवितव्यम् । यदि स पापः प्रदर्शयेन्निजां नृशंसतां तदा भवानपि प्रदर्शयत्वमर्षकार्यम् ॥

भीमः ॥ प्रिये ! तर्हि स्त्रीवेषमहमेव परिगृह्य मन्दारोद्यानं गमिष्यामि । तत्र तदा मन्दालोकतया मयि न पुरुषत्वभीरुदेष्यति तस्य । स तु तदा चित्तचापल्यकार्यं दर्शयिष्यत्येव । ततश्चानन्तरकरणीयं करिष्यते मया, तद्वृक्षान्तरिता पश्य ॥

द्रौपदी ॥ (सलज्जं सस्मितं च) आर्यपुत्रस्य स्त्रीवेषोऽतीव हृदयङ्गमो भवेद्धि ? ॥

भीमः ॥ प्रिये ! किम्मां स्थूलकाय इति परिहासविषयं करोषि ? शृणु तावत्—

स्त्रीवेषं परिगृह्य यद्ययमहं गच्छेयमस्माद्बहिः
दृष्ट्वा विभ्रममस्य मे तु मुनयस्त्यक्ताखिलाशा अपि ।
कन्दर्पोग्रशरानुविद्धहृदया मज्जेयुरुन्मत्तव-
द्रागाब्धौ धृतराष्ट्रसूनुविषये का वा कथा कथ्यताम् ॥११॥

तद्गच्छ, सत्वरमुपानय स्त्रीवेषसमुचितान्युपकरणानि ॥

द्रौपदी ॥ तथाऽस्तु, (स्वगतं) मया चिन्तितमिदानीमुपनतम् । (इत्यवनमितमुखी सस्मितं निष्क्रान्ता) ॥

भीमः ॥ (सशीर्षान्दोलनं श्मश्रुकलापमङ्गुलिमुखेन परामृशन्गगने दत्तदृष्टिः) अरे ! रे! धार्तराष्ट्रपशो ? मन्दारोद्यानदेवतायै तावद्वध्यपशुतां नीतोऽसि । अद्य हि—

परिरम्भणकैतवेन दोर्भ्यां
सुहृदं त्वां परिगृह्य मर्दयामि ।
दशदिक्षु विनिक्षिपन्तमक्षि
क्षुभितं द्रक्ष्यति मे प्रिया स्फुरन्तम् ॥१२॥

(स्त्रीवेषसमुचितोपकरणपाणिः प्रविश्य द्रौपदी)

**द्रौपदी** ॥ (सस्मितं सलज्जं च) आर्यपुत्र ! समानीतान्युपकरणानि तदलङ्कुरुतार्यपुत्रः (इत्युपकरणान्यर्पयति) ॥

(भीमश्चण्डातकोपरि परिधाय दुकूलमवगुण्ठितमस्तको वलयधारणं नाटयति)

(द्रौपदी—मुक्तामालाभिर्भीमकन्धरामलङ्करोति) ॥

**भीमः** ॥ प्रिये ! सत्वरमुपनय दर्पणं, पश्यामस्तावन्मुखसौन्दर्यम् ॥

(द्रौपदी—सस्मितं दर्पणमानीयार्पयति) ॥

**भीमः** ॥ (मुखमवलोक्य) हन्त ! पोटा संवृत्ताऽसि (इति श्मश्रुकलापं पाणिना परामृशति) (द्रौपदी स्मयते) ॥

**भीमः** ॥ (विचिन्त्य) हुं ! भवतु, दुकूलेन मुखमाच्छाद्य गच्छामि । (परितो विलोक्य) प्रिये ! पश्य सन्निहित उपःकालः-

तारुण्यव्यतिकरकान्तकायकान्ते-
मुग्धाया नततनु ! पारशीकनार्याः ।
ऐन्द्रीयं दिगनुकरोति गण्डभित्तिं
कान्त्याऽद्य प्रसृमरशोणिमाऽवदाताम् ॥१३॥

तत्साधयामो मन्दारोद्यानमार्गमादेशय !

**द्रौपदी** ॥ (सस्मितं) इत इत एहि ॥

(भीमः—परिक्रामति) ॥

**द्रौपदी** ॥ आर्यपुत्र ! इदं मन्दारोद्यानं, पश्यत्वार्यपुत्रः ॥

भीमः ॥ (स्पर्शसुखमभिनीय) प्रिये! विकसत्तामरसकषायगन्धकन्दलितदलितमन्दारकुसुमपरिमळमिळितपरागभारभन्धरस्समूह्यमानप्रालेयशीतलशीकरस्समीरस्तनयवात्सल्यादिव मामालिङ्गति । (समन्तादवलोक्य) पतत्रिणोऽपि प्रबुद्धा एव, पश्य—

निषण्णाश्शाखायां पवनचलितात्पत्रपटलात्
क्षरद्भिः प्रालेयैस्सुतनु! पतगास्सिक्तगरुतः ।
विधुन्वन्तः पक्षौ विवलितगळाश्चोटिपुटतः
समीकुर्वन्त्येते निजनिजकुलायस्य पुरतः ॥१४॥

(नेपथ्ये) इत इतो देवः

भीमः ॥ (आकर्ण्य नेपथ्याभिमुखमवलोक्य) प्रिये! संप्राप्तो धार्तराष्ट्रापसदः ॥ तद्भवामेनामादाय वृक्षान्तरिता भव । अहं पुनर्मन्दारकुसुमान्यपचिनोमि । (इति तां संप्रेष्य पुष्पापचयं नाटयति) ॥

(ततःप्रविशति वनपालप्रदर्श्यमानमार्गो दुर्योधनः)

दुर्योधनः ॥ गच्छ मन्दारक! मन्दारोद्यानस्य द्वारे सावधानं भवता स्थातव्यं, अन्तः कमपि मा प्रवेशय! ॥

वनपालः ॥ यथाऽऽज्ञापयति देवः (इति निष्क्रान्तः)

दुर्योधनः ॥ अपिनामेदमुपवनमलङ्कृतं स्यात्पक्ष्मलाक्ष्या? (क्षितितलमवलोक्य सहर्षं) आयातेव दृश्यते, यतः—

प्रालेयबिन्दुधवलीकृतशाद्वलेऽस्मि-
न्रम्ये स्थले तुहिनशैत्यभियाऽतिमन्दम् ।
न्यस्ताऽपि नुन्नहिमबिन्दुतया स्फुटाङ्का
सन्दृश्यतेऽतिहरिता पदपद्मपङ्क्तिः ॥ १५ ॥

तदनेन विटपिवाटेनान्तर्हितगात्रो गत्वा पश्यामि तावत्किं करोति सा मृगाक्षीति (इति परिक्रामति)

(भीमः—स्तनमाच्छादयन्नभीक्ष्णं दुकूलेनावगुण्ठितमस्तकः कुसुमगुम्भनं नाटयति)

द्रौपदी ॥ (सस्मितं स्वगतं) [1] अम्हहे! इत्थिआजणविब्भमं सुट्ठु दंसेदि अज्जउत्तो ॥

दुर्योधनः ॥ (विलोक्य सहर्षं)—

एकैकशः कनकभाजनतः प्रसून-
मादाय कोमलकरेण मुहुर्नताङ्गी ।
वृन्ताहिताचलविशालविलोचनाब्जा
मालां नवां रचयति स्पृहणीयशोभाम् ॥ १६ ॥

—तदुपसर्पामि (इत्युपसर्पति) ॥

(भीमः—अर्धरचितां मालां विहाय सत्वरमुत्थाय सलज्जं सविभ्रममन्यतो गच्छति)

दुर्योधनः ॥ (सादरं) प्रिये!

कथं वा प्रालेयव्यतिकरजडे शाद्पटले
निधायाङ्घ्रिं कान्ते! किसलयनिभं यासि? सुतनु! ।
गृहाणैनां मालां रचय परिपूर्णामुपयमं
स्रगेषा नः कण्ठे कलयतु भवत्या विनिहिता ॥ १७ ॥

(इत्यसमग्रां मालामादायानुगच्छति) ।

भीमः ॥ (स्वगतं सस्मितं) साधु, दुर्योधन! साधु, सम्यगभिहितं भवता "उपयमं" इति तत्सत्यमेवाचिरादेव त्वां स्रगियं नयति यमसमीपम् ॥

(द्रौपदी—स्मयते)

(भीमः—भयं नाटयति)

(1) (छाया) अहो! स्त्रीजनविभ्रमं सुष्ठु दर्शयति-आर्यपुत्रः ।

**दुर्योधनः** ॥ मयि सति तव भीतिर्ब्रूहि कस्मान्मृगाक्षि !
प्रकटय मुखचन्द्रं न्यक्कृताम्भोजशोभम् ।
असमशरशरौघैर्जातमत्यन्ततापं
मम हरतु भवत्यास्त्वङ्कपालिः कृशाङ्गि ! ॥१८॥

प्रिये ! अलं साध्वसेन—

कुसुमापचयश्रान्तां ननु ! बाहुलतां तव ।
संवाहयामि दासोऽहं मदङ्कं तदलङ्कुरु ॥ १९ ॥
(इत्यर्गळीभूय ग्रहीतुमिच्छति) ।

(भीमः—सभयमन्यतो गच्छति) ।

**दुर्योधनः** ॥

कलक्वणितमञ्जुळैर्विविधपक्षिभिर्दन्तुरं
मनोहरसुमावळिप्रसृतमन्दगन्धाञ्चितम् ।
समीरपरिनर्तितव्रततिजालदोलायितं
लतागृहमुपैहि मद्धृयविलोलरम्येक्षणे ! ॥२०॥

**भीमः** ॥ (सविभ्रमं सलज्जं स्त्रीसमुचितकण्ठेन) [1]जइ मह वळ्ळह-जणो एदं उत्तंतं सुणोदि तदा कुप्पेदित्ति वेवइ हिअअं ॥

**द्रौपदी** ॥ (स्वगतं सस्मितं) [2]अज्जउत्त ! तं सच्चं एव्व । तुह तत्तो महदी भीदी खु ! ॥

**दुर्योधनः** ॥ (स्वगतं सहर्षं) इयमायातेव मदीयं पन्थानम् । यतो मधुरमधुरया गिरा प्रकाशयति निजाशयं (प्रकाशं) कलभाषिणि !—

दासेभ्यः पाण्डुपुत्रेभ्यः कुतोऽद्यापि भयं तव ! ।
आत्तधैर्या कृपां कान्ते ! दासेऽस्मिन्नाशु दर्शय ॥२१॥

---

(छाया) [1] यदि मम वल्लभजन एतं वृत्तांतं शृणोति तदा कुप्यतीति वेपते हृदयं ।
[2] आर्यपुत्र ! तत्सत्यमेव, तव तस्मान्महती भीतिः खलु ।

**भीमः** ॥[1] जइ एव्वं, ता एद्ध किंवि पुच्छिस्सं ॥

**दुर्योधनः** ॥ (सानुनयं) पृच्छ सुन्दरि ! धन्यो भवेयम् ॥

**द्रौपदी** ॥ (स्वगतं सस्मितं) [2] अज्जउत्तो किं वा पुंच्छइ । सुंणोमि दाव ॥

**भीमः** ॥ [3] ता भाणुमदीए ठाणं तुए मह देदव्वम् ॥

**द्रौपदी** ॥ (विहस्य स्वगतं) [4] साहु, णाह ! साहु, सुट्ठु मंतिदं । होदु, एदस्स एसो किं वा उत्तरं देदि । पेक्खिस्सं ॥

**दुर्योधनः** ॥ (सत्वरं) किमुक्तं ? प्रिये ! "भानुमत्यास्स्थानं त्वया दातव्यं" इति । शृणु तावत्—

त्वत्पादसंवाहनसक्तपाणौ
मयि प्रिये ! भानुमती तदा सा ।
करे दधाना व्यजनं नताङ्गी
दासीव ते स्थास्यति पार्श्वं एव ॥२२॥

तदेहि—

गाढालिङ्गनभुग्नचूचुककनद्वक्षोजकुम्भाऽधुना
मत्कण्ठार्पितदीर्घबाहुलतिका प्रोद्भिन्नरोमाञ्चिता ।
कान्ते ! स्वर्गसुखं तवाधरसुधादानेन दीनाय मे
कन्दर्पोरुशरानुविद्धहृदयायापादय द्रौपदि ! ॥२३॥

(इत्यालिङ्गति)

(भीमः—सरभसं स्वाङ्गं धुनोति)

---

(छाया) 1. यद्येवं तर्हि अत्र किमपि प्रक्ष्यामि ।
2. आर्यपुत्रः किं वा पृच्छति । शृणोमि तावत् ।
3. तर्हि भानुमत्यास्स्थानं त्वया मह्यं दातव्यं ।
4. साधु, नाथ ! साधु, सुष्ठु मन्त्रितं भवत्वेतस्य एष किंवोत्तरं ददाति द्रक्ष्यामि ।

**दुर्योधनः** ॥ (सुदूरे निपत्य सवैलक्ष्यं सशङ्कं सत्रासं स्वगतं) हन्त! किमिदमबलाया ईदृशी शक्तिः ? (सविमर्शं) स्यादपि क्षत्रियपुत्री खल्वियं (प्रकाशं) प्रिये! किमिदमभ्यर्थिताऽप्येवं मयि निर्घृणाऽसि ? (इति गाढा-लिंगनमुद्रेति पूर्वोक्तमेव पठन्पुनरप्युपसर्पति) ॥

**द्रौपदी** ॥ (स्वगतं) [1] अह्महे ! अज्जवि वम्महसरग्गिदज्झंतहिअएण एदेण अज्जउत्तो ण ण्हादो । ता एव्त्र एव्वं पुणोवि जण्णसेणीबुद्धीए अज्जउत्तं उवसप्पेइ एसो ॥

**भीमः** ॥ (सक्रोधं गाढतरमालिङ्ग्य) अरे! धार्तराष्ट्रापसद! पर वधूजनबद्धादर! नराधम ! किमुक्तं भवता ? —

"गाढालिङ्गनमुग्नचूचुककनद्वक्षोजकुम्भाऽधुना
मत्कण्ठार्पितदीर्घबाहुलतिका प्रोद्भिन्नरोमाञ्चिता ।
कान्ते ! स्वर्गसुखं तवाधरसुधादानेन दीनाय मे
कन्दर्पोरुशरानुविद्धहृदयायापादय द्रौपदि !" ॥२३॥

इति खलु ? अरे मूर्ख! नाहं द्रौपदी, भीमोऽस्मि, पश्या-धुनैव स्वर्गसुखं ददामि ते (इत्यधः पातयति)।

**दुर्योधनः** ॥ (सत्वरमुत्थाय स्वगतं) हन्त! वञ्चितोऽस्मि तया । किं करोम्यद्य (विचिन्त्य सहर्षं) स्मृतमिदानीं (प्रकाशं) कःकोऽत्र भोः ॥

(प्रविश्य वनपालः)

**वनपालः** ॥ आज्ञापयतु देवः ॥

**दुर्योधनः** ॥ सत्वरं मद्वचनादाहूय युधिष्ठिरार्जुन—नकुल—सहदेवान् ॥

**वनपालः** ॥ यदाज्ञापयति (इति निष्क्रान्तः) ॥

**दुर्योधनः** ॥ (सक्रोधं) अरे ! वैधेय ! दासस्य ते कियद्विकत्थनं ? विस्मृता किं दास्यवृत्तिः? पश्य तावदधुना कालयामित्वामरण्यम् ॥

(छाया) 1. अहो ! अद्यापि मन्मथशराग्निदह्यमानहृदयेनैतेनार्यपुत्रो न ज्ञातः ! तस्मादेवैवं पुनरपि याज्ञसेनीबुध्याऽऽर्यपुत्रमुपसर्पत्येषः ।

(ततः प्रविशन्ति युधिष्ठिरार्जुन–नकुल–सहदेवाः)

**युधिष्ठिरः** ॥ (स्वगतं) किमर्थं दुर्योधनेन समाहूतास्स्मः ? अपि-नामाभ्यपतद्वृकोदरः प्रकुपितो दुर्योधनम् ? ॥

(सर्वेऽप्युपसृत्य भीममवलोक्य विहसन्ति)

**युधिष्ठिरः** ॥(सस्मितं) वत्स! भीम! किमिदं ? कोऽयं वेषः ? ॥

**भीमः** ॥ (सामर्षं) आर्य ! भवन्माहात्म्यकारितोऽयं स्त्रीवेषः ॥

**युधिष्ठिरः** ॥ वत्स ! कोपं मा कार्षीः, शान्तिमवलम्बस्व ॥

**भीमः** ॥ (सामर्षं सोत्कंपं च)—

कथं मनसि शान्तिर्मे भवत्यार्यातिनिष्ठुरम् ।
परस्त्रीसङ्गहासक्तं विलोक्यैनं नराधमम् ॥२४॥

(इति कृतमुष्टिर्दुर्योधनमनुधावति)

**दुर्योधनः** ॥ (सक्रोधं) अरे ! मूर्ख ! अयं न भवसि (इति भीम-मभिपतति) ॥

**युधिष्ठिरः** ॥ (उभावपि निवार्य) वत्स ! भीम ! कथय किमिदानी-ममर्षस्य कारणम् ? ॥

**भीमः** ॥ याज्ञसेनी कथयति, (पार्श्वमवलोक्य) ननु ! याज्ञसेनि ! इत एहि ॥

**द्रौपदी** ॥ (उपसृत्यावनमितमुखी सबाष्पं) [1] अज्जउत्तो एव्व भणादि । णाहं तं भणिदुं वि पारेमि ॥

**दुर्योधनः** ॥ (स्वगतं) हन्त ! इयमप्यत्रैव (सक्रोधं) स्यान्नाम । विलोभनशीलाया अस्याः करिष्याम्यनुरूपामवज्ञाम् ॥

**युधिष्ठिरः** ॥ (स्वगतं) हन्त ! इयमप्यत्रैव (प्रकाशं) वत्स ! प्रभाते क्रिमर्थमियमिहागता ? ॥

**भीमः** ॥ (सामर्षं) आज्ञप्ता च दुरात्मनाऽनेन ॥

---

(छाया) 1. आर्यपुत्र एव भणति नाहं तद्भणितु मपि पारयामि ।

**युधिष्ठिरः** ॥ (स्वगतं) आः! कष्टं सुन्दरीणां तरुणीनां सतीनामबलानां परगृहे दास्यकृत्यं (प्रकाशं) कथय किमर्थमाज्ञप्ता ? ॥

**भीमः** ॥ (सक्रोधं) निर्लज्जो दुरात्माऽयं (इति वक्तुमारभते)

**दुर्योधनः** ॥ (सक्रोधं) अरे! मूर्ख! तिष्ठ तावदलं विकत्थनेन। दासस्य कियद्वा वचोविजृम्भणम् (युधिष्ठिरमवलोक्य)—

अयं दुरात्माऽद्य मम प्रतीपो
यतोऽत्र तस्माद्विपिनं भवन्तः ।
आसाद्य संवत्सरमेकमर्थ—
प्रदानतस्स्युः परिमुक्तदास्याः ॥२५॥

**युधिष्ठिरः** ॥ यथाऽऽज्ञापयति महाराजः (इति गन्तुमुद्युङ्क्ते) ॥

**दुर्योधनः** ॥ हन्त ! विस्मृतम् । प्रथमं तावद्वत्सरमेकमज्ञातवासो हि भवताम् ॥

**युधिष्ठिरः** ॥ तथा (स्वगतं) हन्त ! सर्वथा विधिनाऽधः पातितास्स्मः (इति सभार्योऽनुजैस्सह निष्क्रान्तः) ॥

**दुर्योधनः** ॥ दुर्वाससं सपर्यया तोषयित्वा पाण्डवैरार्जितानां द्रविणानां सङ्ग्रहणार्थं प्रेषयामि तावत्। (श्मश्रुकलापमङ्गुलिमुखेन परामृशन्गगने लक्ष्यं बद्ध्वा) अरे! द्रौपदि! किं मां न जानासि दुर्योधनम् ? ॥

द्रव्याभावात्पुनरपि पतीन् दासभावे नियोज्य
प्रागल्भ्यात्ते प्रकटितमहावञ्चनायास्सभायाम् ।
राज्ञां मध्ये सपदि वसनं कर्षयित्वा पतीना-
मग्रेऽवज्ञां सुतनु ! महतीं कारयिष्याम्यहन्तु ॥२६॥

(इत्युद्धतं परिक्रम्य साटोपं निष्क्रान्तः) ॥

**इति श्रीयदुशैलवासि-बालधन्वि-जग्गू-वकुळभूषणकवि-विरचिते अद्भुतांशुकनाटके चतुर्थोऽङ्कः ॥**

॥ श्रीः ॥

# पञ्चमोऽङ्कः॥



(ततः प्रविशति वनोचितवेषो भुजशिखरविनिहितगदो भीमसेनः)

**भीमः** ॥ (नेपथ्याभिमुखमवलोक्य)—

तरोश्शाखा दीर्घा सुतनु ! भवतीवात्र विनता
धरेयं गर्ताढ्या ललितगमने ! कण्टकचिता ।
इतस्तस्मादेहि क्षितिनिहितदृष्टिस्तु पुरतो
निधायाङ्घ्रिं मन्दं मृदुलतरशादे वनपथे ॥१॥

(ततः प्रविशति क्षितितलविनिहितदृष्टिर्द्रौपदी)

**द्रौपदी** ॥ [1] णाह ! दुक्करं खु रण्णगमणं ॥

**भीमः** ॥ (सानुतापं) प्रिये ! किं कुर्मः ? अज्ञातवासार्थमस्माभिः—

उषितं विराटभवने तु हायनं
- पिहितात्मपौरुषमनोहराकृति ।
ननु शौर्यनुग्रहबलात्करग्रहोऽ-
प्यभिमन्युमत्स्यसुतयोरभूत्तदा ॥२॥

**द्रौपदी** ॥ (सोत्कंपं) [2] अह्महे ! अज्जवि तं णिसंसं कीअअं सुमरिअ वेवइ मह हिअअं ॥

**भीमः** ॥ प्रिये ! किमद्यापि तस्माद्भीतिः ?

प्रचण्डमुष्ट्याहतिघूर्णिताक्षं
करात्करे कन्दुकवन्निपात्य ।
गतासुमेवाकरवं नृशंसं
तं कीचकं सुन्दरि ! ते समक्षम् ॥३॥

---

(छाया) 1. नाथ ! दुष्करं खल्वरण्यगमनम् ।

2. अहो ! अद्यापि तं नृशंसं कीचकं स्मृत्वा वेपते मम हृदयम् ।

द्रौपदी ॥ (सबाष्पं) [1] मह्कए अज्जउत्तेण महंतं दुक्खं अणुहूदं इदोवरं रण्णे वि किं किं अणुहोदव्वं ण जाणामि ॥

भीमः ॥ प्रिये ! अलं चिन्तया । तस्यैव भगवतः कृष्णस्यानुग्रहाद्वन-वासोऽपि सुसुखं प्रचलिष्यति ॥

द्रौपदी ॥ (नासाविकासमभिनीय) [2] को एसो ? अपुव्वो दिव्वो पुप्फामोओ एत्थ पसरेइ ? ॥

भीमः ॥ प्रिये ! सौगन्धिककुसुमामोदोऽयम् ॥

द्रौपदी ॥ (सहर्षं) [3] अह्महे ! कआवि ण मए एआरिसो पुप्फ-गन्धो अणुहूदपुव्वो ॥

भीमः ॥ पक्ष्मलाक्षि ! दिव्यभूप्ररूढानि तानि कुसुमानि स्पृहणीय-वर्णानि च ॥

द्रौपदी ॥ (सानुनयं) [4] अज्जउत्त ! ता तं मह आणीअ देहि ।

भीमः ॥ (सस्मितं) मुग्धे ! किमु मन्यसे तानि चैत्ररथरूढानि कुसुमानि सुसंपादानीति ? ॥

द्रौपदी ॥ (सस्मितं) [5] अज्जउत्त ! तुए दाणिं धणं आणेदुं धणदेण जुद्धं करणिज्जं खु । ता काळणं विणा उआसीणेण सह ण करणिज्जं जुद्धं । ता मए दाणिं काळणं विण्णाविदं । जइ तुए ओहरीअदि तं पुप्फं तदा कुवि दो धणदो जुद्धं कादुं आअच्छइ ॥

भीमः ॥ (सहर्षं) प्रिये ! साधु मन्त्रितं । ते तु सचिवतासमुचिता धीरापादयत्यपरिमितमामोदम् । तदद्य—

(छाया) 1. ममकृते आर्यपुत्रेण महद्दुःखमनुभूतं । इतःपरमरण्येऽपि किं किमनुभवितव्यं न जाने.

2. क एषः ? अपूर्वो दिव्यः पुष्पामोदोऽत्र प्रसरति ?

3. अहो ! कदाऽपि न मया एतादृशः पुष्पगन्धोऽनुभूतपूर्वः.

4. आर्यपुत्र ! तर्हि तन्मह्यमानीय देहि.

5. आर्यपुत्र ! त्वयेदानीं धनमानेतुं धनदेन युद्धं करणीयं खलु । तर्हि कारणं विनोदासीनेन सह न करणीयं युद्धं, तस्मान्मयेदानीं कारणं विज्ञापितं । यदि त्वयाऽपह्रियते तत्पुष्पं तदा कुपितो धनदो युद्धं कर्तुमागच्छति.

कौबेरान् गदया विदार्य समरे वीरान्करालानहं
रोषारब्धनियुद्धमब्जनयने ! यक्षाधिपं क्ष्मातले ।
क्रीडाकन्दुकवन्निपात्य सुहृदा दत्तैस्सुमैस्तेन तै-
श्शीर्षे ते द्रविणैश्च धर्महृदयं चामोदयाम्यञ्जसा ॥४॥

तदत्रैव तिष्ठ तावदचिरेण विजित्य कुबेरमहमागमिष्यामि ॥

**द्रौपदी** ॥ (सहर्षं) [1] जेदु अज्जउत्तो । एत्थ एव्व चिट्ठिअ तुह आअमणं पेक्खिस्सं ॥

**भीमः** ॥ प्रिये ! मामागतमवेहि । अवहिता भव तावदत्र विपिने दुर्योधनहतकपक्षीयो यः कोऽप्यापतेत् । (इति निष्क्रान्तः) ॥

(द्रौपदी—परितः पश्यन्ती शिलातले समुपविशति)

**(ततः प्रविशति जयद्रथः)**

**जयद्रथः** ॥ आज्ञप्तोऽस्मि महाराजदुर्योधनेन, "कथमपि बलाद्द्रौपदीमपहृत्योपनय" इति । विपिनेऽस्मिन्पर्यटता मया युधिष्ठिरपर्णशालायामन्विष्टाऽपि न दृष्टा। अयमेवावसरस्तामपहर्तुं, यतो न सन्निहितौ भीमार्जुनौ। सा पुनर्न लब्धा । क्व वा स्यान्मृगाक्षी? । (दीर्घं निश्श्वस्य) हन्त ! निरर्थकं जातमिदानीन्त्वटवीपर्यटनं । किं करोमि । (इति परिक्रम्य द्रौपदीमवलोक्य सहर्षं) ॥

किसलयमपचित्य वन्यवल्ल्या
नखरमुखेन मुहुर्विपाटयन्ती ।
अवनमितमुखीह निर्निमेषा
द्रुपदसुता वनदेवतेव भाति ॥५॥

(सवैलक्ष्यं) हन्त ! एनामवलोक्य कस्य वा नोदेति स्पृहा ? ॥

नूनमस्यास्तु सौन्दर्यलोलुपैः पाण्डुनन्दनैः ।
एकैव पञ्चभिर्भार्या कृतेयं सुन्दरीमणिः ॥६॥

---

(छाया) 1. जयत्वार्यपुत्रः । अत्रैव स्थित्वा तवागमनं द्रक्ष्यामि ।

भवतु नाम पृष्ठतो गत्वाऽ त्यायते लोचनकुवलये पिधाय पाणिभ्या क्षणमिव क्रीडामि (इति मन्दमुपसर्पति) ॥

(द्रौपदी—शुष्कपर्णशब्दश्रवणमभिनीय सभयं झडित्युत्थाय परितः पश्यति)

**जयद्रथः** ॥ (सत्वरं वृक्षान्तरितो भूत्वा)—

प्रतिवृक्षमियं भियाऽतिलोलं
नयनेन्दीवरमाशु निक्षिपन्ती ।
तरळायतफालकुन्तलाळि-
र्नवनीलोत्पलमातनोति कान्त्या ॥ ७ ॥

तन्निवारयामि तावद्भयमस्याः । (इत्युपसृत्य) भीरु ! न भेतव्यं न भेतव्यं-

नितम्बभरमन्थरे ! नमितकन्धरे ! सुन्दरि !
क्षणं रणरणाकुलक्वणितकङ्कणालङ्कृताम् ।
प्रवेष्टयुगळीं तव प्रसवमालिकासन्निभां
निधेहि भुजपीठयोश्चरणदासदासस्य मे ॥८॥

(इति स्प्रष्टुमुपसर्पति) ।

**द्रौपदी** ॥ (सभयं) [1] हा अज्जउत्त ! परित्ताअदु परित्ताअदु । एसो दुट्ठो मं गहीदुकामो उवसप्पेइ । (इत्यन्यतो गच्छति) ॥

**जयद्रथः** ॥ (अर्गळीभूय) प्रिये ! मा भैषीः । क्व गच्छसि ?—

पार्श्वे गर्तस्सुतनु ! निशितैः कण्टकैर्दन्तुरेयं
वन्या भूमिस्स्थपुटितमहाग्रावकूटोऽग्रतस्ते ।
वल्मीकोऽयं चरणनिकटे पृष्ठदेशे निकुञ्जः
पादाम्भोजं कथमिव महाकाननेऽस्मिन्निधत्से ? ॥ ९ ॥

तदेहि । मृदुलास्तरणं मदीयं स्यन्दनमलङ्कुरु ।

(छाया) 1. हा आर्यपुत्र ! परित्रायतां । परित्रायतां एष दुष्टो मां ग्रहीतुकाम उपसर्पति !

द्रौपदी ॥ (संस्कृतमाश्रित्य) अरे ! रे ! मूर्ख ! मा स्पृश मां। गच्छ दूरम् ॥

जयद्रथः ॥ प्रिये ! मा कुप्य तावत् ।

क्रूरसत्वाकरे घोरे कानने सुन्दरानने ! ।
तापसीव कथं बाले ! निवससि ? निवेदय ॥ १० ॥

तदेहि मदङ्कम् । नयामि भवतीं सौधम् ।

द्रौपदी ॥ (सक्रोधं) अरे ! नराधम ! नयति त्वां पन्नगतनयस्त-पनतनयम् (इति धावितुमुद्युङ्क्ते ) ॥

जयद्रथः ॥ मानिनि ! क्व गच्छसि ? यदि नारोहसि मदीयं स्यन्दनं, बलाद्धम्मिल्ले कृतकरोऽहमारोपयामि । तदेहि सामोक्त्यैव ।

द्रौपदी ॥ (सभयं) हा नाथ ! बकनिषूदन ! क्व वर्तसे ? नराधमोऽयं-मां बलात्स्पृशति । तत्पाहि (स्वगतं) हन्त ! अर्जुनोऽपि न सन्निहितो दुष्टमेनं दमयितुम् ॥

(ततः प्रविशति रथाधिरूढोऽर्जुनः)

अर्जुनः॥ मातले ! काननेऽस्मिन्योषित आर्तनाद इव श्रूयते । तदेहि, पश्यामः । (इति रथादवतीर्य मातलिना कतिचित्पदानि गच्छति)

मातलिः ॥ आयुष्मन् ! पश्य पश्य, द्रौपदीं नराधमोऽयं जयद्रथो निरुणद्धि ।—

यतो यतो भिया साध्वी याति सोऽपि ततस्ततः ।
अनुयाति स्थिरो लोहोऽप्ययस्कान्तमणिं यथा ॥ ११ ॥

अर्जुनः॥ (सामर्षं) अरे ! नराधम ! अयं न भवसि । (इति गाण्डीव-मादायानुधावति)

(जयद्रथस्सभयं निष्क्रान्तः)

अर्जुनः ॥ आः पाप ! नृशंस ! क्व गच्छसि ?—

पातालं विशसि किमु ? त्रिविष्टपं वा ?
यक्षेशं शरणमुपैषि ? शङ्करं वा ? ।
एते ते नहि शरणं भवन्ति तस्मा-
न्मद्बाणो यमशरणं नयत्ययं त्वाम् ॥१९॥

(इति धनुर्नियोजितसायको निष्क्रान्तः)

**मातलिः** ॥ (नेपथ्याभिमुखमवलोक्य) अहो ! भिया जयद्रथोऽर्जुनं शरणं प्रपन्नः, (विहस्य) हन्त ! चरणे निपतितस्य कृपया तस्य मुण्डं मुण्डितत्रिपक्ष्कं कृत्वा तं ज्यासंयतकरयुगळं केशपाशे गृहीत्वा प्रतिनिवृत्त एवार्जुनः ॥

**(ततः प्रविशति यथानिर्दिष्टोऽर्जुनः)**

**अर्जुनः** ॥ (सैन्धवं स्यन्दने निपात्य) प्रिये ! कुतस्त्वमेकाकिनीह समायाताऽसि ? ॥

**द्रौपदी** ॥ (सबाष्पं) [1] अज्जउत्त ! अज्जउत्तेण पवणणंदणेण आअदा ॥

**अर्जुनः** ॥ तर्हि क्वेदानीमार्यः ?

**द्रौपदी** ॥ मए पत्थिदो सोअंधिअपुप्फं आणेदुं मं एआइणिं एत्थ उज्झिअ धणदं जेदुं गदो ॥

**अर्जुनः** ॥ (सोल्लुण्ठनं)—

आशापाशनिबद्धस्य मोहाविष्टस्य च प्रिये ! ।
कृत्याकृत्यविवेको यन्नैवोदेतीति तद्ध्रुवम् ॥१३॥

यतस्त्वदाशापूरणमेव परमलाभं मन्यमानस्सत्वार्यो भवतीमेकाकिनीमरण्ये विहाय गतः। यतश्च त्वमपि कुसुमाशया निर्भीकाऽत्र स्थितवती ॥

(द्रौपदी—सलज्जं शिरो नमयति) ॥

---

(छाया) 1 आर्यपुत्र ! आर्यपुत्रेण पवननन्दनेनागता ।
2. मया प्रार्थितस्सौगन्धिकपुष्पमानेतुं मामेकाकिनीमत्रोज्झित्वा धनदं जेतुं गतः।

**अर्जुनः** ॥ भवतु नाम । रथमारोहतु भवती ॥

(द्रौपदी—रथारोहणं नाट्यति) ॥

**अर्जुनः** ॥ (रथे समुपविश्य) मातले ! प्रेरय वाहान् ॥

(मातलिः—वाहान्प्रेरयति) ॥

**द्रौपदी**॥ (सभयमर्जुनबाहुमवलम्ब्य) अज्जउत्त ! कआ वि ण मए एआरिसो रहवेओ दिठ्ठो। णीसासूसासं कादुं वि ण पारेमि ॥

**अर्जुनः** ॥ भीरु ! पाकशासनप्रेपितो दिव्योऽयं रथः, पश्य वियति धावति—

जीमूता नवतूलशुद्धलघवश्चक्रोत्थवातैरिमे
　　विक्षिप्ताश्च सुदूरमाशु शकलीभूता जवात्स्यान्दनात् ।
वाहानां रसनाखलीनचलनव्याघर्षणात्सृक्वतो
　　निर्गच्छत्सितफेनपिण्डपटलभ्रान्तिं समातन्वते ॥१४॥

**मातलिः** ॥ (अधो विलोक्य) आयुष्मन् ! आयातस्स्यन्दनोऽयं युधिष्ठिरपर्णशालोपकण्ठम् । तदवतारयाम्येनं (इति रथावतरणं नाट्यति) ॥

**द्रौपदी** ॥ (भूमिमवलोक्य) [2] अच्चरिअं ! अच्चरिअं ! अज्जउत्त ! पुढमं एसा पुढवी तुहिणंदरिदा विअ ठिदा । दाणिं सपव्वदपाअवा विसाळा सुट्ठु-दीसदि ॥

**अर्जुनः** ॥ प्रिये ! पश्य, पश्य—

यथा यथा शताङ्गोऽयं वेगादवतरत्यधः ।
　　तथा तथा समीपं नः क्ष्माऽऽयान्तीव दृश्यते ॥ १५ ॥

**मातलिः** ॥ आयुष्मन् ! अवतीर्णोऽयं रथः ।

---

(छाया) 1. आर्यपुत्र ! कदाऽपि न मयैतादृशो रथवेगो दृष्टः। निश्वासोच्छ्वासं कर्तुमपि न पारयामि ॥

2. आश्चर्यमाश्चर्यं ! आर्यपुत्र! प्रथममेषा पृथिवी तुहिनान्तरितेव स्थिता । इदानीं सपर्वतपादपा विशाला सुष्ठु दृश्यते।

(ततः प्रविशति पर्णशालाभ्यन्तरोपविष्टो वनोचितवेषो नकुल-सहदेवाभ्यां सह युधिष्ठिरः)

**युधिष्ठिरः ॥** वत्स ! नकुल ! कन्दमूलफलाहरणाय प्रियया सह गतो वत्सो भीमः, नाद्याप्यागतः । पश्य, नभोमध्यमधिगतवानुष्णरश्मिः-

गाहन्ते तपनातपेन नितरां तप्ता वराहास्सर-
　　स्सारङ्गचयस्सहसा विशन्ति विटपिप्रच्छायमात्मार्भकैः ।
भल्लूका विवृतास्यगह्वरगळल्लाला निकुञ्जे स्थिता-
　　श्श्रूयन्ते गवयोच्चकाहळगळध्वानास्सुदूरे वने ॥१६॥

तत्पश्य तं भीमसेनम् ॥

**नकुलः ॥** यथाऽऽज्ञापयत्यार्यः, (इति द्वारदेशमागत्यार्जुनमवलोक्य सहर्षं प्रणम्य मातलिद्वितीयं द्रौपद्याऽन्तः प्रवेशयति)

**अर्जुनः ॥** वत्स ! नकुल ! नराधममेनं सैन्धवं रथादानय ।

**नकुलः ॥** तथा (इति परिक्रामति) ।

**अर्जुनः ॥** आर्य ! अर्जुनोऽयं प्रणमति (इति प्रणमति)

**युधिष्ठिरः ॥** (मातलिमवलोक्य सहर्षमुत्थाय) अपिकुशलं भवतः ? (इत्यासनं ददाति) ।

**मातलिः ॥** उपविशत्वार्यः । —(युधिष्ठिरः-उपविशति)
(मातलिस्सहार्जुनेनासने समुपविशति) ।

**युधिष्ठिरः ॥**

कुशलमपि सुराणां ? वज्रिणस्सानुजस्य ?
　　प्रबलतरबलेभ्यो दानवेभ्यो न भीतिः ? ।
किमु कथय सकाले भूसुरैर्दीयते वा
　　हविरनघ ! ततस्ते किं प्रसन्ना नरेषु ? ॥१७॥

**मातलिः ॥** आर्य ! मूर्तिमति धर्मे त्वयि स्थिते कथं वा न भवत्येतत्सर्वम् ? ॥

**युधिष्ठिरः ॥** मातले ! जितमनस्कानामपि मुनीनां चित्तचाञ्चल्य-जननी खल्वमरावती । अपिनामोपात्तविवेकोऽयं स्वकार्यैकनिरतः पाकशासन प्रसादपात्रमासीत् ?

**मातलिः ॥** (विहस्य) शृणोत्वार्यः—

ज्योतिष्टोममखान्विधाय विधिवत्स्वर्गं गतानामितो
यस्या दर्शनमेकदा क्षणमपि स्याद्दुर्लभं सा पुनः ।
चञ्चद्दिव्यविभूषणाञ्चिततनू रम्यांशुकाढ्युर्वशी
शश्वद्दर्शितविभ्रमा त्वदनुजे प्रादर्शयत्स्वाशयम् ॥१८॥

**युधिष्ठिरः ॥** (सावेगं स्वगतं) तरुणस्यास्य स्वर्गवासोऽनर्थहेतुरिति प्रागेव निर्धारितं मया । (प्रकाशं) अपिनाम पतितमनेन तस्या विभ्रमवागुरायाम् ? ॥

**मातलिः ॥** (कर्णौ पिधाय) शान्तं पापं, शान्तं पापं । आर्य ! कथं वा निपतेदयं नियतेन्द्रियाणां प्रथमो विवेकी धृतिमान् ? । तत्क्षणमेव प्रणम्य तस्यै सविनयमभ्यवादीत् "अम्ब ! —

पिता मे सुरनाथोऽयं तस्य त्वं प्राणवल्लभा ।
तद्धन्या ननु माताऽद्य पुत्रे मयि कृपां कुरु ॥ १९ ॥

किंच—अस्मद्वंशमूलपुरुषस्य पुरूरवसः कलत्रं हि भवती" इति ।

**युधिष्ठिरः ॥** (सप्रमोदं स्वगतं) साधु वत्स ! साधु, इतः परं जितमेव भवता सर्वमपि जगत् (प्रकाशं) ततस्ततः ।

**मातलिः ॥** ततश्च तयोक्तम्—

"वाराङ्गनाऽस्मि मनुजेन्द्र ! ततो न दोषः
पुण्यैकलभ्यमनुभुंक्ष्व सुखं मयाऽत्र ।
रूपं मदीयमवलोक्य जहाति को वा ?
तत्सुन्दराङ्ग ! कुरु मय्यधुनाऽनुकंपाम्" ॥ २० ॥ इति ॥

युधिष्ठिरः ॥ (विहस्य) प्रायशो जगति कामिन्यस्स्वार्थसाधनपरा स्स्वभावचतुराः, तत्रापि वारवनिताः, तत्राप्यप्सरसः; किं वा वक्तव्यमूर्वश्याम् ? । ततस्ततः ॥

मातलिः ॥ ततश्चानेन नम्रोत्तमाङ्गेन गभीरतरवचसा—

"अम्ब ! वाराङ्गना वा वीराङ्गना वा भव । न मे नयनयुगळं मनसा समं त्वच्चरणसरसिजं विहायोर्ध्वमारोहति" इत्युक्तम् ॥

युधिष्ठिरः ॥ (स्वगतं) साधु वत्स ! साध्वनुष्ठितमसिधाराव्रतं —

यस्या वीक्ष्य पुरूरवास्तु नितरां लावण्यमत्यद्भुतं
मग्नो रागगभीरसिन्धुजठरे रेमे यया वत्सरान् ।
सा दिव्याभरणाञ्चिता स्वयमहो ! वाराङ्गनाऽभ्यागता
सन्त्यक्ता भवतेति यच्चितनुते तन्मेऽधिकं सम्मदम् ॥२१॥

द्रौपदी ॥ (स्वगतं) [1] अह्महे ! अच्चरिअं ! अच्चरिअं ! उव्वसीवि से सुंदेरदंसणेण मोहं उवगदा ? ॥

युधिष्ठिरः ॥ (प्रकाशं) ततस्ततः ॥

मातलिः ॥ ततश्चास्येन्द्रियजयं विलोक्य सन्तुष्टहृदयया तया दत्तेयं कनकमालिका "वत्स ! सन्तुष्टाऽस्मि, गृहाणैनाम् । यत्रेयं वर्तते तत्र धनसमृद्धिः" इति ॥

युधिष्ठिरः ॥ (सहर्षं स्वगतं) पूरितमेव द्रविणैः कोशागारं दुर्योधनस्य ॥

(नकुलः—सस्मितं सैन्धवं केशपाशे गृहीत्वा युधिष्ठिरचरणयोः पातयति)

युधिष्ठिरः ॥ वत्स ! किमिदं । दुश्शलाजानिं सैन्धवमिहानीतवानसि ?

अर्जुनः ॥ दुराचारोऽयं निजदुर्विधिनैवानीतः ॥

जयद्रथः ॥ (स्वगतं) हन्त ! मया स्वामिनि दुर्योधने कृतस्यातिसन्धानस्य फलमिदमनुभूयते ॥

---

(छाया) 1 अहो ! आश्चर्यमाश्चर्यं ! ऊर्वश्यप्यस्य सौन्दर्यदर्शनेन मोहमुपगता ।

(पटाक्षेपेण प्रविश्य भानुमती)

**भानुमती** ॥ [1] परित्ताअदु परित्ताअदु अज्जो । गंधव्वेण बंधिअ कळचळणं अज्जउत्तो णीअदि । (इति युधिष्ठिरचरणयोः पतति) ॥

**युधिष्ठिरः** ॥ किं किं, वत्सो दुर्योधनो गन्धर्वेण नीयते ? कुतो वा तेन निबद्धः ? ॥

**भानुमती** ॥ [2] अज्ज तस्स सरे कीळंतो परिकुविअस्स तस्स वसओ आसि ।

**युधिष्ठिरः** ॥ वत्स ! अर्जुन ! अधुनैव पाकशासनसकाशादुपार्जितायाः अस्त्रविद्यायाः परीक्षावसरस्सन्निधापितो दैवेन । तद्गच्छ । सत्वरमुपाहर वत्सं सुयोधनं, विजित्य गन्धर्वराजम् ॥

**अर्जुनः** ॥ यथाऽऽज्ञापयत्यार्यः (इति प्रणमति) ॥

**युधिष्ठिरः** ॥ वत्स ! विजयी भव ॥

**अर्जुनः** ॥ (मातलिमवलोक्य) मातले ! सारथ्यार्थं भवन्तमभ्यर्थये ॥

**मातलिः** ॥ सिद्धोऽस्मि । आयुष्मन् !—

गन्धर्वानात्तगर्वान्वियति विचरतः कर्णपर्यन्तकृष्ट-
ज्यानुन्नैः प्राज्यभल्लैःक्षतनिजवपुषस्सव्यसाचिन् ! विधाय ।
तेभ्यो भीत्या नतेभ्यो निगडितचरणं धार्तराष्ट्रं सकर्णं
तूर्णं तं मोचयित्वा भयतरळदृशे भानुमत्यै प्रयच्छ ॥२२॥

**अर्जुनः** ॥ (सविनयं) सर्वं च भवदनुग्रहात्संपत्स्यते ॥

**मातलिः** ॥ आयुष्मन् ! रथमलङ्करोतु भवान् ॥

(अर्जुनः—रथमधिरुह्य निष्क्रान्तः) ॥

**युधिष्ठिरः** ॥ प्रिये ! याज्ञसेनि ! किमद्यापि चिरयति भीमसेनः ?

---

1 परित्रायतां परित्रायतामार्यः । गन्धर्वेण बध्वा करचरणमार्यपुत्रो नीयते ।
2 अद्य तस्य सरसि क्रीडन्परिकुपितस्य तस्य वशग आसीत् ।

द्रौपदी ॥ [1] धणदं जेदुं गदो "अचिरेणेव्व आअमिस्सं" त्ति ॥

भानुमती ॥ (स्वगतं) [2] अह्महे ! एक्को धणदं वसीकरेइ । अण्णेण महेन्द्रो वसीकिदो । सूरेहिं किं वा ण करीअदि ॥

(सर्वे नासाविकासं नाटयन्ति)

युधिष्ठिरः ॥ प्रिये ! कोऽयमपूर्वो दिव्यकुसुमामोदः ? ॥

द्रौपदी ॥ (सहर्षं स्वगतं) [3] तं पुप्फं अज्जउत्तेण आणीदं विअ ण्हाअइ (प्रकाशं) सोअंधिअपुप्फस्स गन्धो हवे ॥

युधिष्ठिरः ॥ तह्यायातो भवेन्मारुतात्मजः ॥

(ततः प्रविशति पुष्पकाऽधिरूढो भीमसेनः)

भीमः ॥ अस्मिन्महारण्ये मयाऽन्विष्टा याज्ञसेनी । न क्वापि लब्धा । (सामर्षं) —

योवाऽपहर्ता द्रुपदात्मजाया
लोकत्रयेऽप्यप्रतिमप्रतापः ।
अद्यानुभूतां नरवाहनेन
दशां ददात्याशु गदा तु तस्मै ॥२३॥

(ऊर्ध्वमवलोक्य) अरे ! मत्प्रियापहारिन् ! न जानासि किं मद्गदा-महिमानम् ? शृणु तावत् —

प्रचण्डघण्टारवदारितारि-
वक्षस्स्थली वैश्रवणस्य जेत्री ।
दम्भोळिदम्भाऽपनयेऽपि शक्ता
भात्यंसपीठेऽद्य गदा मदीया ॥२४॥

(इति झडिति विमानादवरोहति) ॥

---

(छाया) 1. धनदं जेतुं गतः "अचिरेणैवागमिष्यामीति ।
2. अहो ! एको धनदं वशीकरोति । अन्येन महेन्द्रो वशीकृतः ? शूरैः किंवा नक्रियते ।
3 तत्पुष्पमार्यपुत्रेणानीतमिव ज्ञायते । सौगन्धिकपुष्पस्य गन्धो भवेत् ।

द्रौपदी ॥ (उद्यानाद्बहिरागत्य भीममुपसृत्य सस्मितम्) [1] अज्जउत्त ! किं तुए आणीदं तं पुप्फं ? ॥

भीमः ॥ (सहर्षं स्वगतं) दिष्ट्याऽत्रैव प्रिया । (प्रकाशं) प्रिये ! कथमेकाकिनीहागताऽसि ? ॥

द्रौपदी ॥ (सबाष्पं पादाङ्गुष्ठेन क्षितितलमालिखन्त्यवनमितमुखी) [2] अज्जउत्त ! णिसंसो दुस्सळावल्लहो एआइणिं म पेक्खिअ गहीदुं आअदो ।

भीमः ॥ (सक्रोधं) आः किं ? सैन्धवाधमस्त्वां ग्रहीतुमागतः ? पश्याद्यैव गत्वा तं नराधमं करोमि नामशेषं (इति साटोपं परिक्रामति) ॥

द्रौपदी ॥ [3] अज्जउत्त ! अळं अमरिसेण । सो दुट्ठो एत्थ एव्व उडए वट्टेइ ॥

भीमः ॥ क स पापी ? (इत्युद्धतं द्रौपद्या सह प्रविश्याभ्यन्तरं सैन्धवं शिरसि गृहीत्वा सस्मितं) अरे ! कोऽयं वेपः ? ॥

(सर्वे विहसन्ति)

(जयद्रथः—वेपमानस्तिष्ठति)

भीमः ॥ (सक्रोधं) अपिनाम स्पृहयसि याज्ञसेन्यै ? (इति सदन्तपीडं गदामुद्यम्य प्रदर्शयति)

(जयद्रथः—पिण्डीकृतगात्रो बद्धाञ्जलिपुटस्समुपविशति)

युधिष्ठिरः ॥ वत्स ! भीम ! मुञ्च दुश्शलाजानिं, आसीदस्यार्जुन एव शास्ता । किमिदमपूर्वं कुसुमम् ?

भीमः ॥ (स्वगतं) हन्त ! विस्मृतमस्य दुरात्मनश्शिक्षणासक्तेन मया प्रकृतकार्यमेव (प्रकाशं) आर्य ! —

---

(छाया) 1. आर्यपुत्र ! किं त्वयाऽनीतं तत्पुष्पम् ?

2. आर्यपुत्र ! नृशंसो दुश्शलावल्लभ एकाकिनीं मां दृष्ट्वाग्रहीतुमागतः ।

3. आर्यपुत्र ! अलममर्षेण, सदुष्टोऽत्रैवोटजे वर्तते ।

दृष्ट्वा मां योद्धुकामानहमहमिकयाऽभ्यागतान् यक्षवीरान्
भूमौ तान्पातयित्वा प्रचलितगदया तत्क्षणादापतन्तम् ।
संक्रुद्धं किन्नरेशं रणशिरसि वशीकृत्य नृत्यन्निवेशः
कल्हारं तेन दत्तं द्रविणमपि समानीतवान्पुष्पकेऽस्मिन् ॥२५॥

(इति नकुलमवलोक्य) वत्स ! सहदेवेन समं पुष्पकाद्द्रविणभारमानय । प्राप्नोतु वैहायसं विमानं वैश्रवणम् ॥

नकुलः ॥ तथा (इति सहदेवेन सह गच्छति)

भीमः ॥ (द्रौपदीमवलोक्य) याज्ञसेनि !—

प्रालेयपर्वततटीसरसीपयस्सु
स्थित्वा चिरेण कमलाक्षि ! रविप्रतीक्षम् ।
घोरं तपः कृतवदद्य तवोत्तमाङ्ग-
लाभात्सुमं सफलतां लभतां नितान्तम् ॥ २६ ॥

(इति पुष्पमर्पयति)

(द्रौपदी—सस्मितं सलज्जं चादाय पाणिभ्यां सविनयं—साकूतं च युधिष्ठिरं पश्यति)

युधिष्ठिरः ॥ मत्तकाशिनि ! उत्तमाङ्गमलङ्कुरु कुसुमैरेतैः । लभतां तावत्साफल्यं वत्सस्य परिश्रमः । (द्रौपदी सस्मितं तथा करोति)

भानुमती ॥ (साभ्यसूयं स्वगतं) [1] धण्णा खु एसा, जा एआरिसेहिं देव्वजोग्गेहिं विसएहिं अणुहोइ सोक्खं ॥

भीमः ॥ क्वेदानीं वत्सोऽर्जुनः ?

युधिष्ठिरः ॥ गन्धर्ववर्गवशगं धृतराष्ट्रसूनु-
मानेतुमद्य दृढबन्धनतो विमोच्य ।
पार्थो युयुत्सुरचिरात्पुरुहूतदत्त-
मारुह्य दिव्यरथमात्तधनुः प्रयातः ॥२७॥

---

(छाया) 1. धन्या खल्वेषा या एतादृशैर्देवयोग्यैर्विषयैरनुभवति सौख्यम् ॥

भीमः ॥ (सक्रोधं)

गरळमयकदन्नदानदक्षं
रहसि निकेतनदीपनप्रगल्भम् ।
अपहृतविभवं च कैतवेन
प्रबलरिपुं स कथं विमोचयेत्तम् ॥२८॥

(ततः प्रविशत्यर्जुनो दुर्योधन-कर्ण-दुश्शासनैस्सह)

अर्जुनः ॥ (नकुलमवलोक्य) वत्स! कथमत्र पुष्पकं? किमा यातोऽलकाया आर्यभीमसेनः।

नकुलः ॥ बाढम् । (इति सहदेवद्वितीयो धनभस्त्रिका आदायान्तः प्रविशति)

दुर्योधनः ॥ (कर्णं विलोक्य जनान्तिकम्) हन्त! कुबेरमपि विजित्य द्रविणभारस्समार्जितस्स्याद्भीमेन?

अर्जुनः ॥ (अन्तः प्रविश्य) आर्य! अभिवादये (इति युधिष्ठिर भीमौ प्रणम्य दुर्योधनादीन्युधिष्ठिरचरणयोः पातयति)

जयद्रथः ॥ (स्वगतं) हन्त! कथमिदानीं मुण्डितत्रिपट्टकदूषित- मुण्डं मुखं प्रदर्शयाम्येतेषां? (इति पराङ्मुखस्तिष्ठति) ।

दुर्योधनः ॥ (स्वगतं) धिगेनं मां, क्षत्रियकुले किमिति जनितोऽस्मि विधिना?। हन्त! परबलादबलाजनवदन्येन क्षत्रियवीरेण तत्रापि विपक्षेणा- नेन मोचितोऽस्मि । स्यान्नामैतत् —

शयनभवनपालने नियुक्त-
श्शकुनिविलोभितचेतसा मया यः ।
कथमिव मुखमद्य दर्शयेयं
प्रथितबलाय वृकोदराय तस्मै ॥२९॥

(इति पार्श्वमवलोक्य) हन्त ! दुश्शलाजानिरद्यैव मुण्डितमुण्डो वर्तते । आः ! भानुमतीसमक्षं यदेतादृशी परिभवपरंपरेति, तदतीव लज्जावहम् । सर्वथा न केवलं पाण्डवानामवहेळनपात्रं कौरवाः, अपितु सर्वस्य लोकस्य ॥

भीमः ॥ (सक्रोधं) अरे ! कुरुकुलाधम ! अपिनाम स्मरसि ? —

"शकुनिकर्णविकर्षणपण्डित-
स्सुहृदि दर्शितबाहुपराक्रमः ।
मदनुजे रचितात्यवमाननः
क्व नु ममानुचरोऽद्य वृकोदरः ॥"—इति ॥२९॥

अरे ! साधुजनातिसन्धानैकनिरत ! निस्त्रप ! किमित्यद्यापि धृतप्राणोऽसि ? (सशीर्षान्दोलनमर्जुनमुखमवलोक्य) वत्सार्जुन ! कुतो वा गन्धर्वसकाशादमूमुचस्त्वमेनं दुरात्मानम् ? ॥

यत्कैतवं प्रचलबाहुबलार्जितां मे
राज्यश्रियं कुरुसुताय ददावमुष्मै ।
गन्धर्वराजवशगं समरे नृशंस-
मेनं तदेव किमु नैव विमोचयेद्वा ? ॥३०॥

युधिष्ठिरः ॥ वत्स ! भीम ! किमिदं ? अट्टालकादधःपतितस्योपरि लगुडाघात इव पराजितेऽस्मिन्परुषभाषणखड्गः पात्यते भवता ? तदलमवहेळनेन । पश्य भगवानंशुमाली निजरथतुरगखरखरतरखुरनिकरपुटकोटिकुट्टनत्रुटितचरमगिरिसानुधातुधूलीपटलरञ्जित इव पाटलमण्डलः प्रयाति मिमंक्षुरिव जलनिधिम् —

तेजस्सवित्रा निहितं दिनान्ते
हुताशनोऽपि प्रतिपद्य वेद्याम् ।
तपोधनानामुटजेषु शिष्यै-
स्सन्धुक्षितः प्रज्वलति प्रकामम् ॥३१॥

तदेतेऽपि गच्छन्तु निजनगरमेव ॥

**दुर्योधनः** ॥ (स्वगतं) हन्त ! कथमरण्येऽपि नियतिरनुकूला कल्पयति सकलामपि संपदमेतेषाम् । भवतु नाम । एतान्निष्ठ्यूतसारान्कर्तुं दुर्वासा एव प्रभवति । तदभ्यर्थये पुनरपि तमेव । (इति लज्जावनमितमुखैर्बन्धुभिस्सह निष्क्रान्तः) ॥

**युधिष्ठिरः** ॥ वत्स ! भीम ! वयमपि सन्ध्यामुपासितुं सरसीं गच्छामः ॥

(इति निष्क्रान्तास्सर्वे)

इति श्रीयदुशैलवासि-बालधन्वि-जग्गू-वकुळभूषणकवि-
विरचिते अद्भुतांशुकनाटके पञ्चमोऽङ्कः ॥



॥ श्रीः ॥

# षष्ठोऽङ्कः ॥



(ततः प्रविशति वटुवेषधारी कृष्णः)

कृष्णः ॥ (पाणिभ्यां नयनयुगळं परिमृज्य प्राचीं दिशमवलोक्य) हन्त ! उदित एव भगवान्भास्करः प्रकुपित इवारुणप्रभः । तथाहि—

आसायं रविरम्बरे निजकरैर्गन्धर्वलोकच्छला-
चित्रं रम्यतरं विलिख्य विविधैर्वर्णैस्समुद्रं गतः ।
रात्र्या गाढतमोमषीकलुषितं निर्वर्ण्य रोषारुणो
रङ्गाजीव इवापरेद्युरचिरादायाति कर्तुं पुनः ॥ १ ॥

अहो ! छात्रवृत्तिर्जगति क्लेशकरी खलु, तत्रापि रोपकषायितस्वान्तस्य गुरोस्सकाशे । अद्य तु पाण्डवानां कृते मया दूर्वाससस्सकाशेऽन्तेवासित्वमङ्गीकृतम् । अहो ! कष्टं तदनुवर्तनम् । स तु—

पृष्टेन दत्ते प्रतिभाषणे मया
वाचाट इत्युद्भटचक्षुरीक्षते ।
मौने कृते बालिश इत्यतिक्रुधा
हुंकारगर्भं परितर्जयत्यहो ! ॥ १ ॥

तथापि बदरिकाश्रमे पुरा नरावतारेऽनुष्ठितशिष्याचारतया मयेदानीं साहसं क्रियते कर्म ।—

तत्तत्कालकलोचितामनुमतां भ्रूचालनेन क्षणात्
शुश्रूषां विनयेन साधु मधुरस्मेराननोऽभ्याचरन् ।
आरुण्यं प्रतिघोद्गतं नयनयोरत्युग्रमत्युज्ज्वलं
सान्ध्यं सूर्य इवाद्य तस्य नितरां निर्वापयाम्यञ्जसा ॥३॥

तदिदानीं "सन्ति वा न वा पाण्डवाः पर्णशालायामिति ज्ञात्वा मे निवेदय" इति दुर्वाससाऽऽज्ञप्तोऽसि । तत्तन्नियोगमशून्यं करोमि (इति परिक्रम्य नेपथ्याभिमुखमवलोक्य) हन्त ! अत्रैवात्रिपुत्रस्समायातः । अयं हि विलम्बासहिष्णुः प्रकुपित इव दृश्यते —

पिशङ्गतटिदुज्ज्वलोद्भटजटाच्छटाभीषणः
क्षणक्षुभितमीक्षणं क्षरदिवासृगुद्भ्रामयन् ।
कमण्डलुकरश्चलत्पृथुलघोरशोणाधरः
स्फुरत्स्फटिकमालिकावलयितप्रकोष्ठो मुनिः ॥४॥

(ततः प्रविशति यथानिर्दिष्टो दुर्वासाः)

**दुर्वासाः** ॥ (परितो विलोक्य) अहो ! उदितप्राय एव भगवान्भास्करः । नाद्यापि विदितपाण्डवोदन्तो मदन्तेवासी श्यामलकः प्रतिनिवृत्तः । (सश्लाघं) अमर्षपरिस्फुरत्स्फुलिङ्गालिङ्गितं मन्नयनयुगळमवलोक्य न कोऽपि वटुः—मुहूर्तमात्रमपि मामनुवर्तते । अयं पुनश्श्यामलकस्साधुशीलोऽविदितकृत्रिमव्यापारोऽमन्दानन्दमातनोति मे । साधु ! श्यामलक ! साधु सुशिक्षितोऽसि सच्छात्रवृत्तौ । तथाहि—

शुश्रूषुश्शरणं गतो नतिपरस्त्यक्ताभिमानस्सुधी-
र्दान्तश्शान्तिगुणाञ्चितस्समुचितव्यापारसक्तस्सदा ।
पृच्छाकालनिरीक्षणैकनिरतस्तत्त्वाभिलाषी ततो
लोके प्राथमिकोऽसि सद्गुणगणैस्सच्छिष्यमध्ये मम ॥ ५ ॥

(इति परिक्रम्य कृष्णमवलोक्य स्वगतं) किमद्याप्यत्रैव श्यामलकः ? (प्रकाशं) भोश्श्यामलक ! किमलस इव मन्थरोऽसि ? तदविलम्बितं याहि युधिष्ठिरोटजोपकण्ठम् (स्वगतं) किमपि निदानमन्तरा तदार्जितद्रविणापहरणमनुचितं हि । तदद्य किं करोमि ? (विचिन्त्य) भवतु तावत्तपःप्रभावेन स्पृहणीयरूपं कनकहरिणं विधाय श्यामलकमेनं प्रेषयामि (प्रकाशं) तात ! श्यामलक ! मत्सङ्कल्पात्कनकहरिणोऽसि । तद्गच्छ युधिष्ठिरोटजपरिसरे पर्यटंस्तेषु येन केनचित्संस्पृष्टः प्रमीतकल्पो भव । अहं पुनरनन्तरकरणीयं करिष्यामि ॥

**श्यामलकः** ॥ यदाज्ञापयन्त्याचार्यपादाः (स्वगतं) हन्त ! —

रामत्वे यादृशेनाहं वञ्चितः कानने पुरा ।
तादृशं गृह्यते रूपं हरिणस्य मयाऽधुना ॥ ६ ॥

(इति कनकमृगरूपं गृहीत्वा) अद्य खलु कृष्णमृग इत्यभिधानं सार्थमासीत्, यतः कृष्णेन मया मृगरूपमासादितम् । (इति निष्क्रान्तः) ॥

**दुर्वासाः** ॥ अहमपि धर्मराजपर्णशालोपकण्ठे वृक्षवाटान्तरितो भवामि। (इति परिक्रम्य) अयमेवोटजो युधिष्ठिरस्य । (इति वृक्षान्तरितस्तिष्ठति)॥

**(ततः प्रविशत्युटजाजिरोपविष्टस्सानुजो याज्ञसेन्या सह युधिष्ठिरः)**

**युधिष्ठिरः** ॥ प्रिये ! हायनमेकं विपिनेऽस्माभिरुषितं, आर्जितश्च भीमादिभिर्द्रविणभारः । पञ्चषाः परं दिवसाः—वनवासेनातिवाहयितव्याः ततश्चोत्तीर्णसङ्करमहार्णवप्रान्ततया कृतार्था वयम् ॥

**द्रौपदी** ॥ (दीर्घं निश्श्वस्य) [1] अज्जउत्तेण उण सच्चं एव्व भणिदं, जइ तेसु दिअहेसु मज्झे ण कोवि हवे अंदराओ । (इति पार्श्वतोविलोक्य सहर्षं) अह्महे ! एत्थ हाडअमओ मओ पचलेइ । इमस्स सुंदेरं पेक्खिअ मह हिअअं विम्हअं अणुहोदि ॥

**(ततः प्रविशति तत्रतत्र तृणाङ्कुरखादनमभिनयन् हरिणः)**

**युधिष्ठिरः** ॥ (निर्वर्ण्य) प्रिये !

प्रकृतिमधुरमम्बुजाक्षि ! रूपं
जगति मृगस्य तु चञ्चलेक्षणस्य ।
तदपि च हरिणे सुवर्णवर्णे
किमु पुनरस्ति निवेदनीयमस्मिन् ॥ ७ ॥

**दुर्वासाः** ॥ (स्वगतं) अभिनयप्रकटितमृगप्रकृतिकेऽस्मिन् न भवत्यन्यथा प्रतिपत्तिः—

---

(छाय) 1. आर्यपुत्रेण पुनस्सत्यमेव भणितं, यदि तेषु दिवसेषु मध्ये न कोऽपि भवेदन्तरायः । अहो ! अत्र हाटकमयो मृगः प्रचलति । अस्य सौन्दर्यं दृष्ट्वा मम हृदयं विस्मयमनुभवति ।

क्वचिद्धासं जिघ्रन् दरविवृतनासापुटमसौ
भियोद्ग्रीवस्स्तब्धश्रवणयुगळश्चञ्चलदृशा ।
सहुंकारं पश्यन्विपिनमभितश्शष्पकबळं
सफेनं सृक्कभ्यां कनकहरिणः पातयति यत् ॥८॥

किञ्च—

पर्णमर्मररुते सति भीत्या
डीयते वियति पक्षिवदाशु ।
तत्रतत्र तरुमूलनिषण्णान्
जिघ्रतीह हरिणांश्चलवालः ॥९॥

(द्रौपदी—मन्दमुत्थाय तं ग्रहीतुमुपसर्पति) (मृगस्सभयमन्यतस्सवल्गितं धावति)

**द्रौपदी** ॥ (सानुनयं) [1]अज्जउत्त ! तं गेण्हिअ देहि मह ।

**युधिष्ठिरः** ॥ जानकी हरिणमेवमीदृशं
शातकौम्भमभिलष्य वञ्चिता ।
दुःखमाप तदलं मृगेक्षणे !
स्वर्णवर्णहरिणे त्यज स्पृहाम् ॥१०॥

**दुर्वासाः** ॥ (स्वगतं) अपि नाम ज्ञातोऽयमेतैश्श्यामलक इति ? भव त्वग्रे द्रौपदी किं वक्ष्यतीति श्रृणुमस्तावत् ॥

**द्रौपदी** ॥ [2]अज्जउत्त ! मुहुत्तमेत्तं विअ इमस्स मअस्स फरिससुहं अणु होदुकामम्हि । ता गेण्हिअ णं देहि मह । एत्थ तुह को वा वंचणं कादुं आअच्छइ ॥

**दुर्वासाः** ॥ (स्वगतं) मत्तः को वाऽन्यः ॥

---

(छाय) 1. आयपुत्र ! तं गृहीत्वा देहि मह्यम् ।

2. आर्यपुत्र ! मुहूर्तमात्रमिवास्य मृगस्य स्पर्शसुखमनुभावितुकामाऽस्मि । तद्गृहीत्वैनं देहि मह्यम् । अत्र तव को वा वञ्चनां कर्तुमागच्छति ॥

**युधिष्ठिरः** ।। (स्वगतं) बहुधा बोधिताऽपि स्त्रीसमुचितमतिरियं न शृणोति मम वचः । (प्रकाशं) वत्स ! भीम ! मन्दं गृहीत्वा हरिणमेनं देहि याज्ञसेन्यै ।।

**दुर्वासाः** ।। (स्वगतं सहर्षं) मम तावदूपूपः पतितो हस्त्यङ्गनीने ।।

**भीमः** ।। यदाज्ञापयत्यार्यः । (इति मन्दमुपसृत्य झडिति हरिणकण्ठे पाणिमर्पयति) ।

(हरिणः— सार्तनादं मृतकल्पः क्षितितले निपतति)

**भीमः** ।। (सोद्वेगं) हन्त ! किमिदं ? मत्पाणिपातमात्रेण प्रमीतोऽयं मृगः ।

**युधिष्ठिरः** ।। (सावेगं) किं प्रमीत एव ? (सानुतापं) भीम ! भवत्पाणिपातवेगहतिक्षुभितगळनाळः प्रमीतो भवेदयम् ।।

**द्रौपदी** ।। (ससम्भ्रममुपसृत्य समुपविश्य च) [1] कहं गओ एव्व ? (सबाष्पं) हा वच्छ ! मअसावअ ! कहं विअ अज्जउत्तकरफरिसमेत्तेण उज्झिअप्पाणोसि । दाणिं पआवइणो सिट्ठिकज्जकोसळं मुहा जादं । तुमं दाव कहंविअ मसिणथळथळंतसुहअविग्गहोवि रण्णे णिवडिदोसि ?।।

(प्रविश्य दुर्वासाः)

कः कोऽत्र भोः ! अपिनाम मदीयः कनकहरिणो भवद्भिर्दृष्टः ? शृण्वन्तु भवन्तस्तदभिज्ञानम् ।।

सौवर्णमङ्गं हरिणस्य तस्य
चञ्चत्पृथुस्थासकशोभितं च ।
कण्ठे तटित्सन्निभदीप्ररेखाः
लसन्ति नेत्रे शिखिचन्द्रकाभे ।।११।।

---

(छाया) 1. कथं गत एव ? हा वत्स ! मृगशावक ! कथमिवार्यपुत्रकरस्पर्शमात्रेणोज्झितप्राणोऽसि ? इदानीं प्रजापतेः सृष्टिकार्यकौशलं मुधा जातम् । त्वं तावत्कथमिव मसृणथळथळायमानशुभगाविग्रहोऽप्यरण्ये निपतितोऽसि ।

**युधिष्ठिरः** ॥ (विलोक्य स्वगतं) अहो ! दुर्वासाः । हन्त ! किं करोमि ? न मेऽद्य किमपि स्फुरति । अशनिपातेनेवास्य दर्शनेन विक्लतामापन्नं मे हृदयम् (प्रकाशं) प्रिये ! कथितं खलु मया प्रागेव कनकमृगे स्पृहा मा भूदिति । पश्येदानीं फलं तस्याः ॥

(द्रौपदी—सभयमुत्थायापसरति) ॥

**भीमः** ॥ (अर्जुनमवलोक्य जनान्तिकम्) प्रथममेवास्य दुर्वाससस्सौजन्यं सौशील्यं च स्पृहणीयं लोकविदितं च । इदानीं पुनः किमु वक्तव्यम् ? न जाने किं वा करोत्ययमिति ॥

**अर्जुनः** ॥ (जनान्तिकम्) सर्वथा पाण्डवानां ललाटे निर्वृतिगन्धोऽपि न लिखितो विधिना ॥

**दुर्वासाः** ॥ (उपसृत्याधः पतितं मृगमवलोक्य) आः ! कथं मदीयो मृगः प्रमीतोऽत्र निपतितः । हा, केन वा मारितः ? (सबाष्पमुपविश्य) हा ! वत्स ! बाल्यात्प्रभृति मदङ्क एव वर्धितो हि । हन्त ! नृशंसैरेतैर्धूर्तबकैरिव गृहीततापसवेषैर्मारितोऽसि ; हा ! वत्स ! बाल्यात्—

तथा तथा मयि प्रीतिं चेष्टाभिस्त्वमदर्शयः ।
यथा यथा मम स्वान्तं विलीय द्रवतां व्रजेत् ॥१२॥
क्व याता तव चेष्टाऽद्य तादृशी हृदयङ्गमा ।
मय्यागतेऽप्यनुत्तिष्ठन् पतितोऽसि महीतले ॥१३॥

तपसा किमितस्त्वयि प्रयाते
किमनेनापि वनेन पावनेन ? ।
जपमालिकया किमु ? त्रयीभि-
स्सकलं यातु समं त्वयैव वत्स ! ॥१४॥

**युधिष्ठिरः** ॥ (सविनयमञ्जलिं बद्ध्वा) मृष्यन्तु भवन्तः, स्पृहणीयरूपोऽयमिति गृहीतः, न तु जिघांसया । तावतैव प्रमीतोऽयम् ॥

**दुर्वासाः** ॥ (सामर्षं) अरे ! मूर्ख ! किमत्र मर्षणम् ? अमर्ष एव । (इति झडित्युत्थाय पाणिमुरसि निधाय विकटं स्थित्वा)—

दुर्वासा इति विख्यातमत्रिपुत्रं न वेत्सि माम् ।
अमर्षज्वलनज्वालावशीकृतजगत्त्रयम् ! ॥१५॥

अरे ! नराधमाः ! —

ज्वलज्ज्वलनसन्निभः क्षतजरूक्षवीक्षाक्षर-
दुरीक्षणविलक्षणक्षुभितकोणशोणद्युतिः ।
दवानल इवाधुना दहति पादपान्दारुणो
दुरोदरपरांश्च वः प्रतिभटानमर्षो मम ॥१६॥

**युधिष्ठिरः** ॥ (अञ्जलिं बद्ध्वा) मृष्यन्तु भवन्तः । नेयं बुद्धिपूर्विका क्रिया । अस्य तु कनकमृगस्य स्पृहणीयसौन्दर्यविलोभितहृदयायै द्रुपददुहित्रे दातुं जिघृक्षया दत्तो भीमेन पाणिः कण्ठतले, तावतैवैतादृशीं दशामापन्नोऽयम् । तदनागसे जनाय मा कुप्यन्तु ॥

**दुर्वासाः** ॥ (स्वगतं) अयमेव सुसमयो भवदर्जितमर्थमपहर्तुम् । (प्रकाशं दीर्घं निश्श्वस्य) हा कष्टं, भोः कष्टं, भोस्सत्यवादिन् ! युधिष्ठिर ! कथं वा सहे शोकमत्युल्बणमाशैशवान्मदङ्कलालितेऽस्मिन् परलोकं गते । हुं, भवतु नाम । (सबाष्पं) तात ! युधिष्ठिर ! चलितं तु चलितमेव । बहिश्चरो ममायं वात्सल्यग्रन्थिः । (सगद्गदम्) तथ्यथ । कथंचिदपि मृगमेनं जीवयिष्यामि ।

**युधिष्ठिरः** ॥ (सबाष्पं) भवद्वचो यथा रोचते ।

**दुर्वासाः** ॥ तदद्य पुण्यतीर्थतीरे महान्यज्ञः कार्यः । तदा श्रोत्रियेभ्यो यथेच्छं वसूनि दातव्यानि, यथा ते लभेरन्सौहित्यम् । तेषामनुग्रहबलादयं त्पुनरपि लब्धप्राणो भविष्यति ॥

**युधिष्ठिरः** ॥ भगवन् ! अलं शोकेन । दीयते तावन्मया द्रविणं, यावत्पर्याप्तम् । (भीममवलोक्य) वत्स ! मन्दरमुटजाभ्यन्तराद्भवदार्जितं द्रविणभारमखिलमप्युपाहर ॥

भीमः ॥ यदाज्ञापयत्यार्यः ॥

(इति धनभस्त्रिका दुर्वाससः पुरो निक्षिपति)

युधिष्ठिरः ॥ (सविनयं) भगवंस्तपोधनेन्द्र !

कुबेरादार्जितं द्रव्यमिदं पवनसूनुना ।

यत्सुयोधनकोशस्य पूरणायैव, गृह्यताम् ॥१७॥

दुर्वासाः ॥ (अर्जुनकण्ठलम्बिनीं कनकमालिकां विलोक्य स्वगतं) इयमप्यपहर्तव्या (प्रकाशं) धर्मसूनो ! किंयदिदं दित्सोर्ममोदारतातृपां या मरीचिकाकल्पम् ॥

(अर्जुनः—कनकमालां कण्ठादवतार्य सविनयं समर्पयति)

युधिष्ठिरः ॥ भगवन् ! सौन्दर्यसारविलोडितविश्रुतजितेन्द्रियवर्गधैर्यसारया पाकशासनवल्लभयोर्वश्या साभिनन्दनमस्येन्द्रियजयं विलोक्य दत्तेयं मालिका—"वत्स ! यत्रेयं वर्तते तत्र धनानां महर्द्धिः" इति । तदनवरतमपि ददातीयं द्रविणं यावत्पर्याप्तम् ॥

दुर्वासाः ॥(स्वगतं) कर्तव्यं कृतं । (प्रकाशं) भीम ! मदुटजमुपनय धनभस्त्रिकाः ॥

भीमः ॥ यदाज्ञापयति भगवान् (इति निजांसपीठे धनभस्त्रिका निधाय निष्क्रान्तः) ।

युधिष्ठिरः ॥ (ससंभ्रमं) भगवन् ! मृगमेनमादाय भवन्तमनुसरामि (इति मृगजिघृक्षया पाणिं प्रसारयति)

दुर्वासाः ॥ (ससंभ्रमं) मा स्पृश, ब्राह्मणकरवर्धितोऽयम् । तदहमेवादाय यास्यामि (इति कराभ्यां मृगमादाय स्वगतम्) —

हन्त ! सम्यगभिनयत्ययमुपरतत्वम् ॥ तथाहि—

उद्धृतोऽपि मया सोऽयं लम्बितायतकन्धरः ।

अर्धमीलितदीर्घाक्षो धत्ते शैथिल्यमङ्गकैः ॥१८॥

(इतिनिष्क्रान्तः)

**युधिष्ठिरः** ॥ (दीर्घं निश्श्वस्य) अहो ! विधिविलसितम् । वत्सार्जुन !

वनीपका वयं क्षिप्रं भविष्यामोऽवनीपकाः ।

सुयोधनधनागारपूरणादिति निश्चितम् ॥१९ ॥

हन्त ! नैवात्र नियतंराशयः । यथाप्रतिज्ञं नियतः कालोऽप्यतिवाहितः । तदद्य दुर्योधनपक्ष्यो यःकोऽप्यापतंदाह्वयितुमस्मान् ॥

**(ततः प्रविशति रथाधिरूढो दुश्शासनः)**

**दुश्शासनः** ॥ अपिनाम दुर्वाससा समुपात्तं स्यात्पाण्डवानामखिलंनम् ? (इत्युपसृत्य) महाराजदुर्योधनस्सभाज्ञापयति "यद्युपार्जितं द्रविणं तर्हि तेन पूर्यतां कोशागारं, नोचेद्दास्यमङ्गीक्रियताम्"— ॥ इति ॥

**युधिष्ठिरः** ॥ सिद्धास्स्मः ।

**दुश्शासनः** ॥ क न्वपरः ? ।

**युधिष्ठिरः** ॥ दुर्वाससो वित्तभारमुद्वहंस्तमेवानुप्रयातः । (नेपथ्याभिमुखमवलोक्य) पश्य सोऽप्यायातः ॥

**(ततः प्रविशति भीमः)**

**भीमः** ॥ (दीर्घं निश्श्वस्य) अहो ! विधिविलसितम् । मूर्ताः क्लेशा एव पाण्डवाः । स्यादेतत् । स तु तापसो यत्क्रोधानलेन पुटपाकं नास्मान्पचतिस्म स एव महाननुग्रहो हि । (अग्रतोऽवलोक्य) अहो ! दुरात्मा नियतैकहायनावसानसूचनाय दुश्शासनहतकस्संप्राप्तः (इत्युपसर्पति) ॥

**युधिष्ठिरः** ॥ वत्स ! भीम ! यथासङ्गरं यास्यामस्सुयोधनसकाशम् ॥

**भीमः** ॥ सिद्धोऽस्मि ॥

**द्रौपदी** ॥ (स्वगतं) [1] अह्महे ! पुणोवि दासत्तणदिढपासणिवद्धह्मि । सो उण महाणुहावो इसी मह प्पाणधणं वा ओहरिअ जइ गओ हवे तदा सुहिआ हुवमु ॥

---

(छाया) 1. अहो ! पुनरपि दासत्वदृढपाशनिवद्धाऽस्मि । स पुनर्महानुभावो-ऋषिर्मम प्राणधनं वाऽपहृत्य यदि गतो भवेत्तदा सुखिता भवेयम् ।

**दुश्शासनः** ॥ सर्वेऽपि रथमधिरोहन्तु सत्वरम् ॥

(सर्वे रथाधिरोहणं नाटयन्ति)

(सूतो वाहान्प्रेरयति)

**द्रौपदी** ॥ (अर्जुनमवलोक्य जनान्तिकं) [1] का गई । दुज्जोहण-हदअस्स णअरं सण्णिहिदं विअ दीसदि ॥

**अर्जुनः** ॥ (जनान्तिकम्) प्रिये ! रथोऽयमतिवेगात्प्रचलति । पश्य ! दुर्योधनस्योपवनोपकण्ठमायातः —

बहुतरवर्णसुमाढ्या
सस्यालिस्स्यन्दनातिजवात् ।
इन्द्रधनुर्वल्लीव
प्रतिभात्युर्व्यां समैकरेखात्मा ! ॥२०॥

**सूतः** ॥ आयुष्मन् ! सौधद्वारमागतास्स्मः ॥

(सर्वे रथावरोहणं नाटयन्ति)—

**द्रौपदी** ॥ [2] अज्जउत्त ! अज्ज अहं उण इड्ढिआजणजोग्गे घरे चिट्ठिस्सं ॥

**युधिष्ठिरः** ॥ प्रिये ! तथैव कुरु तावदिदानीं । ततश्च महाराज-दुर्योधनो यथाऽऽदिशति तथा कुरुष्व ॥

**द्रौपदी** ॥ [3] तहा (इति निष्क्रान्ता) (सर्वे परिक्रामन्ति) ॥

**(ततः प्रविशत्यात्मसमुचितासनोपविष्टैर्भीष्मादिभिः परिवृतस्सपरिच्छद स्सिंहासनोपविष्टो दुर्योधनः)**

**दुर्योधनः** ॥ (स्वगतं) किं नाद्यापि वत्सो दुश्शासनस्समायातः ? ॥

**दुश्शासनः** ॥ (उपसृत्य) आर्य ! पाण्डवास्संप्राप्ताः ॥

---

(छाया)
1. का गतिः । दुर्योधनहतकस्य नगरं सन्निहितमिव दृश्यते ।
2. आर्यपुत्र ! अद्याहं पुन स्स्त्रीजनयोग्ये गृहे स्थास्यामि ।
3. तथा ।

विदुरः ॥ (पाण्डवानवलोक्य स्वगतम्) ---

जटाजटिलमौळयोऽप्युटजवासिनो वल्कलै-
रलङ्कृतसुविग्रहा धरणिमात्रशय्या अपि ।
फलाशनधृतासवोऽप्यमिततेजसा भासुरा
युधिष्ठिरमुखा इमे त्वभिभवन्ति चक्षुर्मम ॥२१॥

(पाण्डवाः—उपसृत्य भीष्मादीन्प्रणमन्ति)

भीष्मादयः ॥ वत्सास्सत्वरं राज्यलक्ष्मीमाप्नुत ॥

दुर्योधनः ॥ (सस्मितं स्वगतं) यदि मया दीयेत ॥

युधिष्ठिरः ॥ (दुर्योधनमुपसृत्य) यथानियममागतास्स्मः ॥

दुर्योधनः ॥ (आसनानि प्रदर्श्य) उपविशन्तु भवन्तः ॥

(सर्वेऽप्युपविशन्ति)—

दुर्योधनः ॥ अपिनाम कोशागारपूर्त्यैं पर्याप्तं धनमार्जितम् ?

युधिष्ठिरः ॥ काकणिकाऽपि नास्मासु ।

दुर्योधनः ॥ (स्वगतं) दुर्वाससा सर्वमप्यपहृतं स्यात् । भवतु । अनेनैव प्रकटीकरोम्यनुयोगमुखेन । (प्रकाशं) धनदादिभिर्दत्तं पाण्डवेभ्यो वित्तमिति हि किंवदन्ती ? ॥

युधिष्ठिरः ॥ तत्सर्वमपि वसु दुर्वाससे समर्पितमस्माभिः ॥

धृतराष्ट्रः ॥ (सहर्षं स्वगतं) अहो ! मयोप्तं बीजमिदानीं फलितम् ।

दुर्योधनः ॥ (स्वगतं) भगवंस्तपोधनेन्द्र ! साधु समाचरितं भवता कदाऽप्यविस्मरणीयं कर्म ॥

धृतराष्ट्रः ॥ (प्रकाशं) वत्स ! युधिष्ठिर ? भवतस्त्वनिरंणैव राज्य-प्राप्तिर्भूयादित्याशयेन कोशागारपूरणं तावत्सानुजस्य ते सुकरमित्ययं नियमः कृतः । हन्त ! विधिविलसितम् ! तदपि न निर्व्यूढम् ॥

दुर्योधनः ॥ तर्हि प्रागिव दास्यमेव भवताम् ॥

युधिष्ठिरः ॥ अथ किम् ? ॥

**दुर्योधनः** ।। (जनान्तिकम्) कर्ण ! निर्वर्तयामि तावदिदानीमत्र द्रौपदीदुकूलाकर्षणेन पूर्वं कृतां प्रतिज्ञाम् । (प्रकाशं) क्वेदानीं द्रौपदी ? ।।

**युधिष्ठिरः** ।। "स्त्रीजनयोग्ये गृहे तिष्ठामि" इति गता ।।

**दुर्योधनः** ।। कः कोऽत्र भोः ? ।।

**(प्रविश्य चेटी)**

**चेटी** ।। [1] आणवेदु महाराओ ।।

**दुर्योधनः** ।। कुलपालिके ! मद्वचनात्पाञ्चालीमित आह्वय ।।

**कुलपालिका** ।। [2] जं देव्वो आणवेदि (इति निष्क्रान्ता) ।।

**युधिष्ठिरः** ।। (स्वगतं) अहो ! पुनरपि दुर्योधनकरजालके निपतिता पाञ्चाली शफरीव ।।

**भीमः** ।। (स्वगतं) इदानीमहं पुनर्न सहे, यद्ययं दुरात्मा प्रागिव द्रौपद्यां दौरात्म्यमाचरेत् ।।

**(प्रविश्य कुलपालिका)**

**कुलपालिका** ।। [3] देव्व ! सा उण मन्दारुज्जाणे पुप्फिणी लदा विअ चिट्ठइ । णाहं आअमिस्संत्ति भणादि ।।

**दुर्योधनः** ।। कुलपालिके ! महाराजदुर्योधनस्समाज्ञापयति द्रविणै-रपूरितकोशागारतया दासी संवृत्ताऽसि, तदविलम्बितमायाहीत्याह्वय ।।

**कुलपालिका** ।। [4] जं देव्वो आणवेदि (इति निष्क्रान्ता) ।।

**विदुरः** ।। (स्वगतं) हन्त ! कोऽयं धर्मः ? पुष्पवती कथमिव प्रविशति सभाम् ? ।।

---

(छाया) 1. आज्ञापयतु महाराजः ।
2. यद्देव आज्ञापयति ।
3. देव ! सा पुनर्मन्दारोद्याने पुष्पिणी लतेव तिष्ठति । नाहमागमिष्यामीति भणति ।
4. यद्देव आज्ञापयति ।

(प्रविश्य कुलपालिका)

**कुलपालिका** ॥ [1] देव्व! सा भणादि "एआरिसाए दसाए कहं विअ अहं महाजणमंडलभरिअं सहं पइसामि ? ता णाहं आअमिस्सं" त्ति ॥

**दुर्योधनः** ॥ (सक्रोधं) आः ! दास्याः कति वार्ताः ? वत्स ! दुश्शासन ! क्षिप्रमेव धम्मिल्लग्राहमानय ॥

**दुश्शासनः** ॥ यदाज्ञापयत्यार्यः (इति निष्क्रान्तः) ॥

**भीष्मः** ॥ (स्वगतं) कृष्ण ! कृष्ण ! आः ! कष्टं, शान्तं पापम् । शान्तं पापम् । (इति कर्णौ पाणिभ्यां पिदधाति) ॥

**कृपद्रोणौ** ॥ (स्वगतं) राम ! राम ! शान्तं पापम्, शान्तं पापं । क्षिप्रमेव स्वमूलनाशाय यतते मूर्खोऽयं (इति पाणिभ्यां कर्णौ पिधत्तः) ॥

**विदुरः** ॥ (स्वगतं) हन्त ! शान्तं पापं, शान्तं पापं, अविलम्बितमेव तस्यास्साध्व्या दुःखभरान्नयनयुगलाद्विगलिता बाष्पबिन्दवः कुरुकुलं समूलं प्रचण्डचण्डकिरणकिरणशोषितजरद्वंशनिकरमिव, विशकलितलघुतरतूलराशि- मिव चाश्रयाशस्फुलिङ्गा नाशयन्ति ॥

**धृतराष्ट्रः** ॥ (स्वगतं) हन्त ! मूर्खस्यास्य कोऽयमारम्भः ? ॥

**अश्वत्थामा** ॥ (स्वगतं) आः कष्टं, कुरुकुलमहाशाखिनः कुठार इव समुत्पन्नोऽयम् ॥

**सभ्याः** ॥ (नासातले पाणिमाधाय स्वगतं) आः ! कष्टम् ॥

**भीमः** ॥ (सामर्ष परिघूर्णिततारकस्समुत्थाय) भोभोस्सभ्याः ! शृण्वन्तु भवन्तः ("विदार्य गदयाऽनया"—इति पूर्वोक्तमेव पठित्वा साटोपं गदां पुरः प्रसार्य "चञ्चत्पीवरबाहुतोलन"—इति पूर्वोक्तमेव पठति) ॥

**युधिष्ठिरः** ॥ (दीर्घं निश्श्वस्य) वत्स ! कोपं मा कार्षीः (इति भीमबाहुमाकृष्य समुपवेशयति) ॥

**नेपथ्ये** ॥ [2] अब्बम्मणहं अब्बम्मणहं परित्ताअदु परित्ताअदु ॥

---

1. देव ! सा भणति "एतादृश्या दशया ! कथमिवाहं महाजनमण्डलभरितां सभां प्रविशामि, तस्मान्नाहमागमिष्यामि" इति ।

2. अब्रह्मण्यमब्रह्मण्यं । परित्रायतां परित्रायताम् ।

पाण्डवाः ॥ (स्वगतं) अहो ! कठोरा वाणीयं तप्तशलाकेव प्रविशति कर्णविवरम् ॥

विदुरः ॥ (नेपथ्याभिमुखमवलोक्य स्वगतं) आः ! कष्टं कष्टम् ॥

शश्वद्वक्षसि चेलकर्षणकृते तेनाहितं पाणिम-
भ्युद्धूयात्मकरेण बाष्पकलिता नीवीं गृहीत्वा दृढम् ।
एकेनैव करेण विश्लथचलद्वेणीं दधाना भिया
क्रन्दन्ती कुररीव धेनुरिव च व्याघ्रान्तिके वेपते ॥२२॥

अयं पुनर्दुरात्मा बलाद्वेणीं गृहीत्वा पुरो नुदति ॥

(ततः प्रविशति यथानिर्दिष्टा द्रौपदी)

द्रौपदी ॥ (सबाष्पं परितो विलोक्य संस्कृतमाश्रित्य) —

आर्या न सन्ति किमिहाद्य सुनीत्यभिज्ञा
धर्मैकसक्तहृदया धरणीशमध्ये ? ।
कर्षत्ययं शिरसि मामबलां गृहीत्वा
सूनापशुं गतदयस्तु यथा शरारुः ॥२३॥

(सबाष्पं पाण्डवानवलोक्य) हे नाथाः ! किमनाथामिवपश्चापि मामुपेक्षन्ते भवन्तः ? पश्यन्तु भवदेकशरणामबलां दुरात्मनोऽस्य करपञ्जरगतां मां करालव्याघ्रदंष्ट्राभयानकवदनकुहरगतामिव हरिणीम् ॥

अर्जुनः ॥ (युधिष्ठिरमवलोक्य सक्रोधं जनान्तिकं) आर्य ! न सहे संप्रति—

भर्तारः पञ्च शूरा नृपसदसि तथा दुष्टदुश्शासनेन
प्रागल्भ्यात्कृष्यमाणां भयतरलदृशं नाथनाथेत्युदश्रु ।
क्रन्दन्तीं वीक्षमाणा द्रुपदतनुभुवं पाण्डवाष्षण्डकल्पा-
स्स्तब्धा मूका ह्यतिष्ठन्निति जगति जनाः कीर्तयन्त्याकतारम् ॥२४॥

तदधुनैव शराग्निना भस्मसात्करोम्येनं दुरात्मानम् । (इति गाण्डीवे ज्यामारोपयितुमुद्युङ्क्ते) ॥

**युधिष्ठिरः** ॥ (जनान्तिकं) वत्सार्जुन ! सन्ति हि सभायां वेत्तारो गुरवः । पश्यामस्तावत्ते किं कथयन्तीति । तदलममर्षेण ॥

(अर्जुनः—दीर्घं निश्श्वस्य कोपमुपसंहरति) ॥

**दुर्योधनः** ॥ (पाणिना निजाङ्कमास्फाल्य) द्रौपदि ! ममेदं सार्वभौमस्याङ्कमलङ्कुरु ॥

**भीष्मः** ॥ (पाणिभ्यां कर्णौ पिधाय स्वगतं) हा कृष्ण ! कृष्ण ! प्रतिहतममङ्गळम् ॥

**द्रौपदी** ॥ (सत्राणं) हा नियते ! पञ्चस्वपि भर्तृष्वेवं धर्मपरेष्वयं दुरात्मा किमन्यत्र कथयेत् ? ॥

॥ भीमः—सामर्षमुत्थाय "मागास्त्वमद्य" इति पूर्वोक्तमेव पठित्वा गदां परिभ्रामयति)

**युधिष्ठिरः** ॥ (भीमं गृहीत्वा) वत्स ! शान्तिमवलम्बस्व ॥

**भीमः** ॥ आर्य ! नेदं स्थानमस्माकं शालीनतायाः । तन्मुञ्च माम् । (इति स्वाङ्गं धुनोति)

**युधिष्ठिरः** ॥ वत्स ! मद्वचनादुपविश, (इत्युपवेशयति)

**दुर्योधनः** ॥ वत्स ! दुश्शासन ! यदीयं मदङ्कं नायाति तदाऽऽकर्ष दुकूलमस्याः ।

**सर्वे** ॥ हा ! हा ! (स्वगतं) किमिदं ? विनाशितयाऽस्य समुत्पन्ना स्यादीदृशी धीः ॥

(दुश्शासनः—दुकूलं कर्षति)

**द्रौपदी** ॥ (सोद्वेगं सरभसं च दुकूलेनाङ्गमाच्छाद्याच्छाद्य तारतारं रुदती)

हे धर्मराज-पवमान-सुरेन्द्र-दस्राः !
वन्द्याः कृपैकनिलया भवतां स्नुषां हा ! ।
दुश्शासनेन सदसीह विकृष्यमाणां
त्यक्तां प्रियैश्च परिपाल्यतावलां माम् ॥२१॥

दुर्योधनः ॥ वत्स ! दुश्शासन ! मा भैषीः । नीवीकलापमधः पातय ।

द्रौपदी ॥ (स्वगतं) हा ! हा ! का गतिः ?

दुश्शासनः ॥ तथा (इति नीवीकर्षणायोद्युङ्क्ते) ।

द्रौपदी ॥ (वेपमाना पाणिभ्यां नीवीं दृढं गृहीत्वा) अहो ! किमिह सर्वेऽप्यन्धाः ? अथवा सर्वथाऽप्यन्धा एव भवन्तु । किमेतैरौपाधिकैर्बन्धुभिश्शक्यते कर्तुं ? तदद्य क्रन्दामि तावद्भगवन्तं वासुदेवम् । (इति बाहुयुगलमुद्यम्याञ्जलिं बद्ध्वा) हे ! लोकनाथ ! आश्रितवत्सल ! सौशील्यादिगुणगणपरिपूर्ण ! कमलालङ्कृतवक्षस्स्थल ! —

निरुपाधिकबन्धुरित्यभिज्ञै-
र्ननु ! नारायण ! गीयसे तदद्य ।
निखिलैरपि बन्धुभिर्विमुक्तां
परिपाह्याश्रितवत्सलाबलां माम् ॥२६॥

हे ! पुण्डरीकनयनाच्युत ! चक्रपाणे !
त्वामेव रक्षकतया शरणं प्रपन्नाम् ।
कृष्णामनन्यगतिकां करुणैकसिन्धो !
रक्षाद्य मां विवसनीक्रियमाणगात्रीम् ॥२७॥

(दुश्शासनः—विवर्धमानविविधदुकूलाकर्षणश्रममभिनीयाधोमुखः पतति)

सर्वे ॥ (सहस्ततालं साश्चर्यं च) अहो ! अद्भुतांशुकमभिवर्धते ।

(गगनात्पुष्पवृष्टिः पतति)

(ततः प्रविशति कृष्णः)

कृष्णः ॥ येन यः पाण्डवसकाशादपहृतो द्रविणभारः, शुश्रूषाप्रसन्नस्य वरप्रदानोन्मुखस्य तस्यैव दुर्वाससस्सकाशात्तमेवाहमादाय तेनैव दुर्योधनधनागारमपूरयम् । स्वान्नामैतत् । हन्त ! न सहे तादृशीं तपस्विनीं पश्यन्तो ये निर्व्यापारा गाव इवातिष्ठन्, तानधुनैव हन्मि पाण्डवान् । (इति साटोपं परिक्रम्य सविमर्शं) हुं ! अथवा मद्भक्ताया द्रौपद्या मङ्गलसूत्रकृते जीवन्तु ते । (द्रौपदीं दूरादवलोक्य सबाष्पं)—

बाष्पप्रवाहपरिषिक्तसमस्तचेला
बद्धाञ्जलिर्हरिणशावकलोलदृष्टिः ।
आश्रित्य मामपि यदीदृशदुःखसिन्धौ
मग्नेति तत्तुदति हन्त ! ममाद्य चित्तम् ॥२८॥

(सगद्गदं) हन्त ! मुनिवरविस्यासक्ततया दूरे स्थितेन मया तदैव तात्र न रक्षितेयमिति प्रदग्धं भवति मे हृदयम् । (इत्युपसृत्य) अरे मूर्ख ! तिष्ठ तावत् ।

सर्वे ॥ (सभयं) हन्त ! कृष्णस्संप्राप्तः ।

धृतराष्ट्रः ॥ (सभयं—स्वगतं) कथं कृष्णः ?, हन्त ! स तु पाण्डवपक्षपाती वत्सं किं वा करोतीति न जाने (प्रकाशं) क्षमस्व कृष्ण ! मूर्खेनानेन कृतमपराधम् ॥

विदुरः ॥ (सबाष्पं—सानन्दं) अम्ब ! द्रौपदि ! धन्याऽसि, (अञ्जलिं बद्ध्वा)—

भक्ताधीनः कृपालुस्सरभसमचिरादेत्य पाञ्चालिकाया
रक्षार्थं पीतचेलं क्षितितलगलितप्रान्तमंसैकलग्नम् ।
कर्षन्नुच्छ्वासलोलं मरकतफलकस्फीतनीलं दधानो
वक्षश्श्रीवासुदेवश्शिशिरयति दृशौ भाग्यतो मे यथेन्दुः॥२९॥

कृष्णः ॥ भो ! दुर्योधन ! पाण्डवैरेवार्जितेन धनराशिना पूरितं तावत्तव कोशागारं, तदेतेषां नैव दास्यम् । तद्दीयतां राज्यम् ॥

भीमः ॥ (सामर्षमुत्थायोरसि पाणिमाधाय) स्वतन्त्रस्संवृत्तोऽस्मीदानीम् । भोभोः ! सभास्ताराः ! सावधानं शृण्वन्तु भवन्तः । (इति गदया दुश्शासनं निर्दिश्य)—

अस्य क्षीबस्य वक्षः प्रणिहितगदया वेणुदारं विदार्य
क्षुभ्यत्कोष्णं क्षरत्तत्क्षतजमभिनवं बुद्बुदाढ्यं कराभ्याम् ।
पायं पायं नृपाणां धुरि रणशिरसि क्रोधवह्निं ज्वलन्तं
भीमोऽयं क्षिप्रमेव प्रशमयति तदा वार्यतां धैर्यतोऽन्यैः ॥३०॥

(द्रौपदी—अवनमितमुखी वेणीमुपसंहर्तुमुद्युङ्क्ते) ।

भीमः ॥ (सरभसं) प्रिये ! तिष्ठ तावत् । मा संहर वेणीम् । शृणु तावत् । अयं जनः—

हल्लकेन परिमण्डितां वने
धार्तराष्ट्रपशुनाऽद्य गर्हिताम् ।
रक्तपाणियुगळेन वल्लभे !
वेणिकां तव तु संहरिष्यति ॥३१॥

किंच । शृण्वन्तु भवन्तः । (दुर्योधनं गदया निर्दिश्य) ॥

प्रचण्डहतिखण्डितप्रलुठितानुजानां शतं
निरीक्ष्य तत्र तत्क्षणं क्षुभितघूर्णिताक्षस्य तु ।
कठोरगिरिकूटवत्कठिनसक्थियुग्मं द्विधा
विदार्य गदया रणे शिरसि वामपादोऽर्प्यते ॥३२॥

(इति साटोपं वामचरणेन क्षितितलं प्रघट्टयति)

दुर्योधनः । (साट्टहासं) भीम ! अलमलं विकत्थनेन । तिष्ठ तावत् । इयन्तं कालं क्वापि लीनं पौरुषं कृष्णदर्शनमात्रेण पुनरिदानीमुद्भिन्नम् । (सक्रोधं) कथं वा स्वतन्त्रोऽसि ? किं तद्धनं भवदर्जितं ? द्यूते तावत्कृष्णो, न पराजितो हि, तदद्य कृष्णेन पूरितमपि कोशागारमपूरितकल्पमेव । न वयमीदृश्या विभीषिकाया विभीमः । तद्यूयं दासा एव ॥

भीष्मः ॥ तात ! दुर्योधन ! कोपं मा कार्षीः । "पाण्डवार्जितैरेव धनैर्मया पूरितं कोशागार"मित्युक्तं हि वासुदेवेन । तदेतेषां नैव दास्यम् । तद्दीयतां राज्यम् ॥

दुर्योधनः ॥ अनुचिता हि वृद्धानां भवतामत्र वाक्प्रवृत्तिः । न वयं श्रद्दधीमहि कृष्णवचनम् । (इति सत्वरमुत्थाय कर्णदुश्शासनशकुनिभिस्सह साटोपं निष्क्रान्तः) ॥

द्रौपदी ॥ (सबाष्पमुपसृत्य) [1] भअवं ! सरणागअवच्छळ ! पंचाळी हं वन्दामि (इति प्रणमति) ॥

---

(छाया) 1. भगवन् ! शरणागतवत्सल ! पाञ्चाल्यहं वन्दे ।

**कृष्णः** ॥ (सबाष्पं सगद्गदं च) अम्ब ! सतीमणे ! क्षिप्रमेवानुभुंक्ष्व वेणीसंहारम् । (युधिष्ठिरमुपसृत्य) आर्य । अलं चिन्तया । कथमपि युवयोस्सन्धिं करिष्यामि । यदि स दुर्योधनो निजशाठ्यमेव प्रदर्शयेत्, तदाऽनन्तरकरणीयं करिष्यामः ॥

**युधिष्ठिरः** ॥ वासुदेव ! परस्परं कथमपि सौहार्दमेव कल्पय । स तु साकल्येनास्मदार्जितं प्राज्यं राज्यं नैव ददातु । किन्तु ग्रामपञ्चकेन तावदलम् । तावतैव सौहित्यमाप्यतेऽस्माभिः ॥

**कृष्णः** ॥ आर्य ! तथैवास्तु । किमन्यत्ते प्रियमुपहरामि ?

**युधिष्ठिरः** ॥ चिरप्ररूढवैरेण कौरवेणास्माकं यत्सन्धिं कल्पयसीति, ततोऽप्यस्ति किं प्रियमन्यत् ? तथापीदमस्तु भरतवाक्यम् —

भूपालाः परिपालयन्तु भुवनं न्याय्येन सम्यक्पथा
स्याद्गोब्राह्मणमण्डलाय कुशलं लोकोऽस्तु नित्यं सुखी ।
कासारा रसपूरिता विटपिनः पुष्पैः फलैस्सम्भृता-
स्सस्याढ्या धरणिश्च सन्तु समये वर्षन्तु धाराधराः ॥२३॥

(इति निष्क्रान्तास्सर्वे)

**इति श्रीयदुशैलवासि-बालधन्वि-जग्गू-वकुळभूषणकवि-विरचिते अद्भुतांशुकनाटके षष्ठोऽङ्कः ॥**

(षष्ठोऽङ्कः सम्पूर्णः)

सम्पूर्णमिदं नाटकम् ॥

भद्रमस्तु ॥

# शुद्धाशुद्ध पत्रिका

| पङ्क्तौ | पुटे | (अशुद्धं) | (शुद्धं) |
|---|---|---|---|
| १९ | ३ | दाज्ञा, | दाज्ञा, |
| ९ | ५ | हतमेवं | हनमेव |
| ७ | ४ | प्रस्तावना | प्रस्तावना |
| २१ | ६ | आज्ञपयतु | आज्ञापयतु |
| १३ | ७ | वन्दायि | वन्दामि |
| २० | ९ | नहारांज | महाराज |
| १० | १० | दुर्योधनः | दुर्योधनः |
| १६ | १५ | पिङ्कंकेशः | पिङ्गकेशः |
| ३ | १६ | दर्धिकर्णः | दीर्घकर्णः |
| ११ | १७ | जित्रजटः | चित्रजटः |
| १३ | १७ | दर्घि | दीर्घ |
| ७ | १८ | जित्र | चित्र |
| ७ | २० | शोमि | शोभि |
| १४ | २० | परिता | पूरिता |
| १० | २१ | घान्तत | चान्तत |
| ११ | ४० | योद्धंत | योद्धतं |
| १२ | ४१ | कचुन्की | कञ्चुकी |
| २९ | ४५ | आर्यं | आर्य |
| १४ | ४७ | भावानेव | भवानेव |
| २९ | ४८ | अभ्रत | अद्भुता |

| पङ्क्तौ | पृष्ठे | | (अशुद्धं) | | (शुद्धं) |
|---|---|---|---|---|---|
| ११ | ४२ | .... | घाटिता | .... | घटिता |
| ११ | ५० | .... | पिहिताङ्गः | ...... | पिहिताङ्गः |
| ६ | ५१ | .... | उझिअ | ...... | उज्झिअ |
| २३ | ५१ | .... | कथयिग्यमि | ...... | कथयिष्यामि |
| ९ | ५२ | .... | मादीया | ...... | मदीया |
| १० | ५४ | .... | तदवृक्ष | ...... | तद्वृक्ष |
| १९ | ५५ | .... | ऐद्रीयं | .... | ऐन्द्रीयं |
| ६ | ५७ | .... | भांजन | .... | भाजन |
| १४ | ५७ | .... | प्रालेयव्यंति | ...... | प्रालेयव्यति |
| १ | ६६ | .... | पाणिभ्या | ... | पाणिभ्यां |
| १२ | ६६ | .... | लङ्कनाम् | ... | लङ्कृनाम् |
| १६ | ६६ | ... | समयं | ... | सभयं |
| ७ | ८२ | ... | वोठजो | ... | वोटजो |
| ७ | ८२ | ... | युधिष्टि | ... | युधिष्ठि |
| २४ | ८२ | ... | भणित | ... | भणितम् |
| १० | ८३ | ... | मुत्थाया | ... | मुत्थाय |
| १५ | ८४ | ... | थळंत | ... | थळाप्रमाण |
| २२ | ८६ | ... | त्पुन | ... | पुन |
| ७ | ८७ | ... | तुषाया | ... | तृषाया |
| ८ | ८८ | ...... | नम् | ...... | घनम् |



Sri U P B. Annangaracharya Swami—Principal, Sanskrit College, Little Conjeevaram :—

यदुगिरिनिवासरसिकैः
कवितावनितास्वयङ्ग्रहैः कान्तैः ।
जग्गुशठजित्कवीन्द्रै-
रचिता वल्लीः कृतीः पठन् मोदे ॥१॥

अद्भुतांशुकसमाख्यमनन्तै-
रद्भुतैस्सुललितैर्मधुरार्थैः ।
वाग्भरैरतिमनोहरमेत-
न्नाटक सुमनसां निधिरेव ॥२॥

अनायासमुग्धैरत्यद्भुतार्थै-
र्गिरां सन्निवेशैर्गभीरं मनोज्ञम् ।
सुधीभाग्यरूपं तमेतं निबन्धं
निरीक्ष्याहमानन्दसिन्धौ न्यमज्जम् ॥३॥

इति काञ्चीपुरीवासी प्रतिवादिभयङ्करः ।
अण्णङ्गरार्यदासोऽयं प्रशशंस प्रहृष्टधीः ॥४॥

(२५-४-३१.)

---

Praktana Vimarsa Vichakshana,
Karnataka Prachya Vidya Vaibhava
Rao Bahadur
R. Narasimhacharya, M.A., M.R.A.S.

Malleswaram,
BANGALORE
10—2—1932

Sriman Vidvan Jaggu Alvar Iyengar has written a drama in Sanskrit styled "Adbhutamsukam." He read out portions of the work to me. Though the author is

young the work has to be looked upon as a very creditable performance The verses run smoothly and the style adopted is appropriate to the characters of the drama. This is intended by the author to form the preliminary portion of the famous drama, the "Venisamhara". The young poet deserves every encouragement.

R. NARASIMHACHAR,
Retd. Director of Archæology
in Mysore.

अस्य कवेः प्रबन्धा अमुद्रिताः ॥

# WORKS BY THE SAME AUTHOR

(UNPUBLISHED.)

1. स्यामन्तक–नाटकम् (Syamantakam-Drama.)
2. जयन्तिका-कथा (Jayantika-Prose Fiction )
3. करुणरस- तरङ्गिणी (Karuna-rasa-tarangini)
4. लक्ष्मी–स्तुति–मञ्जरी (Lakshmi-stuti-manjari)
5. यतिराज–स्तवः (Yatiraja stava)
6. पथिकोक्तिमाला (Pathikokti-mala)

AND OTHER WORKS

*Apply to—*

Sri Jaggu Alwar Iyengar,
(*Sahitya-Vidvan*)
**MELUKOTE,**
(*Via* French Rocks)

